यस्यास्ति भार्या पतिरूपिणो[1] या तस्यैव[2] माता सुतजन्मना सा।
एवं मनुष्यं प्रतितत्त्वमूचुर्देवर्षयो लोकहिताय[3] सौम्याः[4] ॥७७॥
नापुत्रकस्यास्ति गतिः किलेदं[5] जानन्ति सर्वे पशवोऽ[6]पि लोके।
ततोऽत्र तेषामहहा[7] सुतेच्छा यथा तथा वाऽविधितो[8]ऽपि कार्या॥
देवा नराः पुत्रसुखं विशोकं[9] विशेषबुद्ध्याऽ[10]नुभवन्ति मुक्त्यै[11]।
अयन्तु पन्था[12]स्सततं प्रशस्तो विभाव्यते[13] शास्त्रधुरीणमुख्यैः[14] ॥
तस्मा[15]दिदं पुत्रसुखं स्वभावा[16]दिच्छन्ति सर्वे पशुपक्षिवर्गाः।
नापेक्ष्यते केन[17] सुखार्थलाभो न सेव्यते केन सुखं च लब्धम्॥

१. पितुरेव। २. पुत्रप्राप्त्यनन्तरम् कथं ? सुतस्य सा माता, सुत एव पिता अतः पितुरपि माता। ३. लोकोपकाराय। ४. सकरुणं प्रसन्नाः। ५. किलेति प्रसिद्धार्थे। ६. पशवः खलु पुत्रं विनापि स्वेषां सुखं लोके नास्तीति जानन्त्येव। अतस्तेषामपि पुत्रेच्छा। ७. अहहेत्यनुतापसूचकोऽयं निपातः। अनुतापस्तु, जायापतिभावमनपेक्ष्य, अविधितोऽपि पुत्रोत्पत्तौ प्रवर्तन्ते, एते पशव इति बुध्या। अतः पशुजन्म नीचं,पापकरमिति ध्वनिः। ८. युक्तायुक्तपरिज्ञानं विना। ९. विगतः शोकः यस्मात्तत्। १०. मनुष्यजन्मभाज एव परमगतियोग्या इत्यालोच्य। ११. शाश्वतसुखाय। १२. मार्गः। १३. निश्चीयते। १४. शास्त्रज्ञाः-तत्ववेदिनः-योगिनः-सम्प्रदायज्ञाः इत्यादयो मुख्यशब्देन बोद्धव्याः, तैः। १५. एतावदभिवर्णितं अत एव बुद्धिस्थम्। १६. ननु केनापि निर्बन्धेन। १७. सर्वैरपेक्ष्यत एवेति नञर्थकप्रश्नेन तदुत्तरस्याऽवधारणम्।

ज्वलत्यलं[1] साज्यसमिद्भिरग्निः[2] पद्मानि गोभि[3]र्विकसन्ति भानोः।
करैर्हिमांशोः कुमुदानि नित्यं[4] तन्नारदोक्त्या मुमुदे[5] नृपोऽसौ ॥

अतिसुखगतिदो[6]ऽयं पुत्रलाभो नराणां
विहितपतिसतीनां[7] जायते प्रीतिबन्धात् ॥
इति नतनृपमुक्त्वा नारदो धर्मदो[9]ऽसौ
नरपतिहृदयस्थं संशयं[10] सञ्जहार[11] ॥८२॥

इति श्रीवेङ्कटरमणार्यकृते काव्यसमुदये वैदिके
हरिश्चन्द्रचरितकाव्ये पुत्रसुखेच्छा नाम प्रथमस्सर्गः ॥ = ॥

---

१. समीचीनं-धूमं विना । २. आज्यं हि अग्निप्रज्वलनस्य परमसहकारि । ३. किरणैः । ४. नियतम्-अव्यभिचरितमिति यावत् । ५. मोदमापेत्यर्थः । ६. परमसुखगतिदं-नित्यसुखदमिति भावः । ७. एकपत्नीव्रतशीलाःपतयः-पतिव्रताधर्मरताः पत्न्यः, एतादृशां प्रणयानुरागयुक्तानाम् । ८. सत्सन्तानार्थं परस्परप्रेमसमावेश एव प्रीतिबन्धः । तथा चोक्तम् - "दम्पत्योर्हृदयग्रन्थिरपत्यमिति कथ्यते" इति । ९. धर्मबोधकः । १०. कथं सर्वे प्राणिनः पुत्रमिच्छन्तीति प्रश्नेन द्योतितम् । ११. निर्वर्तयामास ।

अन्तिमश्लोकः मालिनीवृत्तनिबद्धः । तल्लक्षणन्तु-

ननमयययुतेयं मालिनी भोगिलोकैः इति ॥

अस्मिन्सर्गे, पुत्रेच्छा—पुत्रोत्पत्तिनिदानं—सत्पुत्रधर्मः—

चतुराश्रमधर्माः-तत्फलम्-इत्यादयोऽभिहिताः ॥ श्रीः ॥

इति श्रीवेङ्कटरमणार्यविरचिते काव्यसमुदये

वैदिके हरीश्चन्द्रचरितकाव्ये, प्रथमसर्गस्य

ग्रन्थकर्तृकृता गम्भीरपदार्थबोधिन्याख्या व्याख्या समाप्ता ॥

# अथ हरिश्चन्द्रकाव्ये द्वितीयस्सर्गः ।

श्रिये[1] हरिश्चन्द्रनृपस्य नारदो निबोध्य[2] तत्पुत्रसुखार्थ[3]कारणम् ।
सुतोदयाय प्रभविष्णु[4]मादरादुवाच पुत्रार्थिनृपं समुत्सुकम्[5] ॥
त्वमद्य पुत्राय निरुध्य चाप[6]लं मदुक्तिमाश्रित्य च विद्धि निश्चयं ।
वरं स दद्याद्वरुणस्तवेहितं[7] तमेव सम्प्रार्थ्य लभस्व तं प्रियात्॥
विभो प्रसन्नो भव मे सुताय भो यजे तदा त्वां शृणु तेन मे विधि[8]म्।
इतीरितं नारद[9]भावमाश्रितो नृपस्ततस्तं वरुणं स[10]माययौ ॥ ३ ॥
ततः कथञ्चि[11]द्वरुणं समाश्रयन्नतः पुरस्तात्सु[12]कृती कृताञ्जलिः ।
अतोषयत्तं नियमेन[13] पा[14]शिनं वरं सवत्र स्व[15]समीहितं नृपः ॥४॥

---

१, अस्मिन् सर्गे प्रथमपद्यमारभ्य यावदुपान्तपद्यं सर्वाणि पद्यानि वंशस्थवृत्तनिबद्धानि । तल्लक्षणं-"जतौ तु वंशस्थमुदीरितं जरौ" इति। २. अभ्युदयाय कथयित्वा । ३. पुत्रसुखाय कारणम् । ४. वरुणस्य दर्शनेनैव पापरूपान्तरायपरिहारत् पुत्रोत्पादककार्ये समर्थमिति। ५. पुत्रदर्शनसुखं सर्वोत्कृष्टमिति नारदवाक्येन सञ्जातकुतुकम् । ६, लोकप्रसिद्धः स्त्रिया योग एव पुत्रोत्पत्तये कारणमितिज्ञानम् । ७, इष्टं-पुत्रप्राप्तिरूपम् । ८. प्रतिज्ञाम् । ९. नारदस्य अभिप्रायम् । १०. वरुणं द्रष्टुं गतवान् । ११. अतिप्रयासेन, देवसाक्षात्कारो न सुलभो हि । १२. पुण्यशाली-अत एव वरुणदर्शनमस्य सम्पन्नम् । १३. शौचादिसम्प्रदायबद्धनियमानुष्ठानेन। १४. वरुणम् । १५. अभीप्सितम् ।

अनुग्रहात्ते मम चेद्भवेत्सुतस्तदाहमत्यन्तकृतज्ञ[1]ताधिया ।
यजे विभो तेन[2] निधाय[3] मे हृदि स्थिरं प्रभो त्वामवगच्छ मे स्पृहाम्[4] ॥
तथेति देवो वरुणोऽब्रवीत्ततो दधार पाणिग्रहणा[5]दृता सती ।
सुखेन गर्भं सुदती महोदये[6]ऽनुकूलकाले[7] सुषुवे सुतं हितम्[8] ॥
नृपो विदित्वाऽथ सुतोदयं[9] क्षणादवगाह्य[10] नद्यां कृतशुद्धविग्रहः[11] ।
गृहं समासाद्य स सूतिकागृहे[12] चकार शास्त्रोदितजातकर्म ततम्[13] ॥
किमुत्तरं हा[14] करवाणि निश्चितं प्रतिश्रुतं[15] हा तनयेन याजनम्[16] ।
सुतं ममेमं वरुणस्य हा कथं ददामि शक्नोमि तथापि[17] जीवितुम् ॥
ध्रुवं स एवात्र समागमिष्यति प्रयत्नतो[18] मे सुतमाहरिष्यति ।
इदं[19] सहेऽहं कथमप्युपायतः[20] समादधामी[21]ति नृपो व्यचिन्तयत् ॥

---

१. कृतोपकारस्मरणेन । २. पुत्रेण । ३. तवासन्निधानेऽपि त्वत्स्मरणपूर्वकम् - त्वामेवोद्दिश्य । ४. अभीष्टम् । ५. सतीषु बह्वीषु भार्यासु, तासां या अग्निसाक्षिकतया राज्ञा ऊढा सा पट्टमहिषी । ६. सर्वेषु ग्रहेषु शुभोच्चस्थेषु सत्सु ७. दशमे मासि । ८. सुतः मे भूयादित्याकांक्षितम् । ९. पुत्रजननम् । १०. अवगाह्य-स्नात्वा वृत्तलक्षणभङ्गभिया अवार्थे वप्रयोगः-"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्यनेन विहितः । ११. जाताशौचेऽपि जातकर्मनिमित्तकस्नानेन शरीरशुद्धिः । तथाह संवर्तः-"जाते पुत्रे पितुःस्नानं सचेलं तु विधीयते" इति । १२. जननगृहे । १३. लोकविदितम् । १४. हा. इति त्रिवारोच्चारणं पुत्रवियोगासहविषादसूचकम् । १५. प्रतिज्ञातम् । १६. यागः । १७. पुत्रत्यागेनापि । १८. बलात् । १९, पुत्रत्यागरूपं दुःखम् । २०. सदुत्तरेण । २१. प्रसन्नं करोमि ।

तदागतोऽसौ वरुणो जगाद तं यजस्व मां तेन[1] यथोदितं त्वया।
निशम्य वाचं सुतवत्सलो[2] नृपस्तदुत्तरं तस्य ददौ यथोचितम्[3]॥

सुतस्तु जातो न हि तस्य योग्यता[4] शिशोरिदानीं दश नाप्यहानि सः[5]।
ततोऽशुचिस्त्वामिह तेन याजनं[6] शुचिर्यदा स्नानमुखाद्[7]भविष्यति[8]॥

तथा कुरुष्वेत्यभिधाय तोषितो[9] नृपस्य वाचा वरुणो जगाम सः।
सुयुक्तियुक्तानि वचांसि शीलिनां[10] हरन्ति शस्तानि[11] मनांसि वाग्मिनाम्[12] ॥१२॥

गतेषु राजाऽथ दशस्वहस्स्वयं[13] सुतस्य नाम्नः करणे कृतोद्यमः।
विचिन्त्य जातो वरुणप्रसादतः सुतस्य नामाऽस्य चकार रोहितम्[14]॥

---

१. सुतेन। २, पुत्रे स्वाभाविकप्रीतियुक्तः। ३, युक्तियुक्तम्। ४, अशौचे सति न किमपि वस्तु दानयोग्यं भवति। ५. शिशुः। ६. यागः। ७. सः यदा शुचिर्भविष्यति तदा तेन याजनं भविष्यति। ८. भाव्यर्थद्योतकक्रियापदस्यास्योभयत्रान्वयः। ९, णिचि क्तप्रत्ययः। १०. सुवृत्तानाम्। ११. शुद्धानि, नतु क्रोधादिना मलिनानि। १२. विदुषां - विबुधानाञ्च। १३. दशसु - अहस्सु, अयं इति पदच्छेदः। १४, वरुणजातत्वात् रोहित इति नाम। वरः वरुणेन नृपे रोहितः इति रुहधातोः णिजर्थमङ्गीकृत्येदं रूपं कथञ्चित्साधनीयम्।

तमाशिषा ब्राह्मणमुख्य[1]बान्धवास्सुमङ्गलासं[2]हतिरार्तिरक्षया[3] ।
सहाक्षतैराभरणाम्बरादिभिस्समोदमाशासत दम्पती तथौ[4]॥१४॥
वधूसमाजो बहुहर्षवर्षता[5]शिशोस्सुडोलोत्सवमीड्य[6]गीतिभिः ।
निशामुखे मङ्गलवाद्यघोषणैश्चकार मातुर्हृदया[7]भिवन्दनम् ॥१५॥
गते दिनानां दशके शिशोस्तदा यजस्व मां तेन शुचिर्हि ते सुतः ।
इति स्वयं तं नृपमब्रवीत्तदा समागतोऽसौ वरुणो विलास[8]तः ॥
ममाद्य हा कष्टमुपैति दैवत[9]: किमुत्तरं दातुमहं च शक्नुयाम्[10] ।
[11]विधो[12]र्विधानं खलु तर्तुमक्षमो बलात्सु[13]धीरोऽपि विमोहितो भवे[14]त्॥

१. ब्राह्मणाश्च मुख्यबान्धवाश्चेति द्वन्द्वसमासः । २. गणः । सुमङ्गलीरिति प्रयोगः वेदेष्वेव साधुः । तत्र "छन्दसी (इ-)वनिपौ च वक्तव्यौ" इत्यनेन इ वनिप्प्रत्ययाभ्यां साधितोऽयं शब्दः । रथीः, इतिवत् । छन्दसि इत्यनेनैव लोके तत्प्रयोगस्य निषेधो अभिव्यक्तः । अतोऽत्र, सु, समीचीनानि-शुभकराणि वा मङ्गलानि यस्यास्सा सुमङ्गलेति विग्रहवाक्यघटितः साधुशब्दः प्रयुक्तः । ३. अर्तिः पीडा तस्याः रक्षा-शान्तिः । ४, शिशोर्मातापितरावपि वस्त्रभूषणादिभिस्सम्भावयामासुरित्यभिप्रायः । ५. अत्यन्तहर्षेण । ६, स्तुत्यानि गीतानि-सम्भावितानि तैः । ७. चित्तोल्लासकरम् । ८. सत्यपरीक्षार्थं खलु वरुणेनापेक्षितः सुतः अयमेव विलासःक्रीडा । देवा हि सर्वदा विलासपराः । ९. विधिवशात् । १०. न शक्नोमीत्यर्थे सम्भावनायां विधिलिङ् । ११. दैवस्य । १२. गतिः । १३. धीबलयुक्तोऽपि - विवेकेन कार्येषु बहुजागरूकोऽपीति यावत् । १४. मोहपरवशः मुग्धः नष्टविवेक इति तात्पर्यम् ।

विचिन्त्य राजेत्थमथ प्रशान्तितो[1] ददर्श युक्तिं सुतवत्सलो हितां[2] सः ।
उवाच धैर्याद्वरुणं समागतं सुतस्य रक्षार्थमिदं वचोऽन्तरम्[3] ॥
पशुस्तु मेध्यो[4] यजनाय[5] कर्मणे यदाऽस्य दन्ता ह्युदयेयुरास्यके[6] ।
अतश्शिशोरप्युदयन्तु ते ततस्समीक्ष्य यक्ष्ये[7] स्वसुतेन सादरम् ॥
इति ब्रुवन्तं वरुणो धराधिपं परीक्षितुं तस्य वचस्तु तथ्यताम्[8] ।
तथा भवत्वेव यथेप्सितं[9] त्वया प्रियोऽसि मे साध्विति तं ब्रुवन्ययौ ॥
सुदन्तजातं[10] स समीक्ष्य बालकं रुरोद राजा कलयन्[11] गतायुषम् ।
किमत्र कुर्यां वरुणे समागते कथं[12] पुनर्मे सुतरक्षणं भवेत् ॥
इति स्थिते राज्ञि समीक्ष्य पुत्रकं[13] जवेन राज्ञो वरुणः पुरः स्थितः ।

---

१. प्रशान्तस्सन् - चित्ते अशान्त्या हि भयशोकमोहानामाविर्भावः । २. श्रोतुस्समाधानदाम् । ३. अन्यद्वचनम्, उपायान्तरसङ्गृहीतमुत्तरम् । ४. परिशुद्धः - योग्य इति यावत् । ५. यज्ञरूपाय - इदं पदं कर्मणेत्यस्य विशेषणत्वेनान्वेतव्यम् । ६. आस्यमेवा-आस्यकम् - स्वार्थे कः-वक्त्रमात्रम्, तस्मिन् । ७. यजधातोः लृटि उत्तमपुरुषैकवचनमिदं रूपम् । ८. तथा साधु - यत्प्रत्ययः तथ्यम्, तस्य भावः तथ्यता ताम् । सत्यम् । ९. यथा त्वया अपेक्ष्यते । १०. सुष्ठु - स्पष्टं यथा तथा जाताः दन्ताः यस्य तम् दन्तेषूद्भूतेष्विति यावत् । "जातिकालसुखादिभ्योऽनाच्छादनात्" इत्यत्र ज्ञापकान्निष्ठान्तस्य परनिपातः । ११. विदित्वा । कलिधातोः यथेष्टार्थः प्रसिद्धः । १२. केनोपायेन । १३. पुत्रम् - अल्पार्थे - अनुकम्पार्थे वा कप्रत्ययः ।

कृतप्रतिज्ञः[1] सुकृती[2] भवेति तं सुतेन यागाय[3] बभूव चोदयन्[4] ॥
पशो[5] रदा[6] हि प्रथमे[7] पतन्ति हा[8] पुनश्च दन्ताः समुपेयुरीप्सिताः[9]।
पतन्तु काले[10] ह्युदयन्तु मे सुते ततस्स पुत्रो[11] यजनाय कल्पयते[12] ॥
यदा क्षितीशो पुनरेवमाह तं तदास्य सूक्त्या मुमुदेऽप्पतिस्स्वयम्[13] ।
प्रियं सुराणां निजभावतो[14] भवेद्यथार्थभावास्[15]सुखदायिनोऽनिशम्॥
पुनस्तथेति स्वभिधाय वादिनं[16] जगाम राजा वरुणस्स्वमालयम्[17] ।

---

१. कृता-निर्व्यूढा - प्रतिज्ञा येन सः तीर्णशपथ इति यावत् । २. कृतप्रतिज्ञत्वादेव कृतकृत्यः - पुण्यशालीति तात्पर्यम् । ३. यागं कर्तुम् । ४. प्रेरणां कुर्वन् । ५. यागोद्दिष्टस्य अजादिपशोरपि । नात्र सामान्यार्थे पशुशब्दप्रयोगः । अस्मिन्प्रकरणे रोहितनामकबालकस्येति सम्भावना । यतः अयमपि वरुणदेवतां प्रति यागाय स्वपित्रैव पशुत्वेन प्रकल्पितः । अतः पशुस्थानीय इत्यभिप्रायः । ६. दन्ताः । ७. प्रथमपर्याये उदिताः । ८. हेति खेदप्रदर्शनम् । दन्तपतनादनुक्षणं वरुणाय स्वसुतस्समर्पयितव्य इति भवितव्यतास्मरणेन सञ्जातव्यसनस्य लिङ्गम् । ९. अपेक्षिताः । १०. युक्तकालेऽष्टमद्वादशवर्षमध्ये इत्यर्थः । ११. पुनर्नवोदितदन्तः । १२. अहं मे सुतं यागाय कल्पयामीति कर्त्रर्थेकर्मणि प्रयोगः । १३. वरुणः-जालाभिमानिदेवता । १४. यथार्थसङ्कल्पात् । १५. निष्कलङ्कमनसा सत्यप्रतिज्ञया सङ्कल्पिताः । १६. नृपं - बहुभिः पर्यायैः समयोचिताभिर्युक्तिभिर्वरुणेन वदनात "वादी"ति प्रयोगः। १७. देवाः कामचारिणः सर्वत्र सन्निधातुं शक्ताः तथापि तेषां नियतानि स्थानानि श्रुतिस्मृतिपुराणाद्यनुगृहीतानि खलु ।

भवेत्परीक्षापरधीः[1] क्रियावतां[2] सदैव सत्ये[3] विहिता महात्मनाम्[4]॥
स्वपुत्रवृत्तं[5] भयदं[6] नु केवलं[7] नयेन[8] गुप्तं[9] विनयेन[10] रक्षितम्[11]।
कथं कथं[12] वा वनिता जनश्रुतं पिधाय[13] मातुः श्रवणं बहिर्गतम्॥
ततो गतेऽसौ वरुणे भयान्वितो[14] जगाद भार्यां स्वकृतं[15] नृपोऽहितम्[16]।
समर्पितुं तं वरुणाय विह्वलः[17] सुतं स भार्यासहितो व्यचिन्तयत्॥
अहो बताऽयं बहुकालतस्सुतो वराद्धि[18] जातो वरुणप्रसादतः।
कथं नु तस्मिन् सुतमर्पितुं मनस्सहेत मे हा मम जन्म[19] निष्फलम्॥

---

१. परीक्षायां निश्चिता धीः। २. अङ्गीकृतकार्यनिर्वाहकाणाम्। ३. सत्यविषय एव । ४. उदात्तहृदयानाम्। ५. वृत्तान्तम्। ६. भयकारि। ७. नत्वन्यभावस्य अवकाशप्रदं। ८. नीत्या। ९. पालितम्। १०. विवेकपूर्वकमार्गेण। ११. रहस्यभेदो यथा न भवेत्तथा जागरूकतया पालितम्। १२. केन वा रहस्यभेदप्रकारेण। १३. मातृश्रवणागोचरं यथा तथा श्रुतं, मातरं विना अन्याभिर्वनिताभिः कथं वा श्रुतमित्यभिप्रायः। १४. पुत्रयाचनाय वरुणः आगच्छत्येवेति कारणाद्वा, अनेकवारं पुत्रमोहेन स्वप्रतिज्ञारूपो धर्मः स्वेनैव युक्तिभिः प्रच्छादित इति धर्मलोपस्मरणेन वा, कथमेनमतिदुःखकरं वृत्तान्तं भार्यायै कथयामीति व्यथानुभवाद्वा अस्य भयं जातम्। १५. स्वेनैव सम्पादितम्। १६. दुःखकरम्—नृपो हितमिति पदच्छेदे वरुणो गतः पुत्रो रक्षित इति तात्कालिकसुखाभिमृष्टम्। १७. दुःखितः। १८. स्वयं तादृशं वरं वव्रे। १९. जातस्य सुतस्य त्यागार्थं निष्पादितं जन्म।

पतन्ति दन्ता उदयन्ति ते पुनः कथं सुतं मे परिवर्जयाम्यहम्[1]।
कियद्दिनं हा ननु[2] यापयाम्यहं मम प्रतिज्ञा[3]विरहेण धीबलात्[4]॥
रुदन्तमेवं सुसमीक्ष्य[5] भार्यया व्यलक्ष्य[6]ताऽहो सुतमोहका[7]रणात् ।
कुतस्तु जाताऽहमिहेदृशीं[8] व्यथां विधेऽनुभोक्तुं विधिना[9] कृतां वृथा[10] ॥३०॥

तयोश्च[11] देवो रुदतोस्समीपतस्स्वरूपमादर्शयताऽऽदिशन्नृपम् ।
सुतेन ते[12] याष्टि[13]रहो[14] विलम्ब्यते[15] यजस्व धीरो[16] भव ते प्रतिज्ञया[17]॥
सुतस्य दन्ताःपतितास्त्वथोदिता यथो[18]दितं मेध्यममुं सुतं निजम् ।

---

१. त्यजामि । २. नन्विति कालयापनमेवं कर्तुं न युक्तमिति विचिन्त्य तादृशोत्तरद्योतकप्रश्नमुखात्सम्भावना कृता । ३. सत्यमसत्यं कर्तुम् । ४. बुद्धिकौशल्येन । ५. सम्यग्विज्ञाय ईक्षणव्यापारोऽत्र न केवलं बाह्यविषयकः किन्तु अन्तर्बुद्ध्यालोचनपरः । ६. भावे लङ् । ७. काक्वा पुत्रसम्बन्धापादकमायिकाऽज्ञानात् । ८. अनिर्वाच्याम् - अतिशयितामिति यावत् । ९. दैवेनापादिताम् । १०. निष्प्रयोजनमिहाहं जातेति स्वजन्मनिन्दाद्योतकमव्ययम् । ११. तयोः रुदतोस्सतोः अत्र चकारः वाक्यद्वयसमुच्चयद्योतकः । निपातानां दूरान्वयदोषो न विद्यते । १२. सतिसप्तमीविभक्तिर्वा रुदन्तौ तौ अनादृत्येति अनादरे षष्ठीऽवात्र ग्राह्या । १३. यागः । १४. विलम्बस्य असमानतया जुगुप्साद्योतकाऽऽश्चर्यसूचकम् । १५, यष्टुं विलम्बं मा कुर्विति तात्पर्यम् । १६. निर्मलचित्तो भव-भयहेत्वदर्शनात् । १७. प्रतिज्ञापालनेन । १८. यथाप्रतिज्ञातम् ।

निवेद्य मेऽद्य स्थिरजीवितो महीं सुखेन संरक्ष कृतोद्यमः कृती॥

निशाम्य देवं वरुणं पुरस्थितं निशम्य तद्वाचमहो विमूर्च्छिताम्।

नृपः क्षणाच्चन्द्रमतीं जलादिभिः प्रियां समाश्वासयदेवमाह ताम्॥

कुतोऽत्र चिन्ता सुतवत्सले प्रिये समेऽत्रजाता नियता हि मृत्यवे।

---

१. स्थिरजीवी सन्-कर्तरि क्तः। २. स्वेनैव निर्व्यूढराज्य-कलापस्सन् - अनेन दुर्मन्त्रिमन्त्राधीनत्वं राज्ञः वार्यते । ३. कृतकर्तव्यत्वेन धन्यः । ४. दृष्ट्वा । ५. श्रुत्वा अत्र निशाम्य, निशम्य, इति भिन्नार्थे सदृशरूपशब्दप्रयोगः शब्दालङ्कारनिमित्तकः । ६. "तव पुत्रेण मां यजस्वे"ति वाक्यार्थस्य बहुवारं परिचितत्वात् नृपस्य चित्तं व्याकुलितमपि न तावन्मूर्च्छास्पद-मासीत् । प्रथमश्रुतत्वात् स एव वाक्यार्थो राज्ञ्या मूर्च्छोपादक आसीदिति आश्चर्यम् अहो इति पदेन कविनाऽत्र सूचितम् । ७. आदिशब्देन शैत्योपचारसाधकानि अन्यानि वस्तून्यपि सङ्गृहीतानि । ८. सुतप्रिये । ९. सर्वे । १०. निश्चिताः "जातस्य हि ध्रुवो मृत्युः" इति न्यायेन ।

परन्तु काले किल[1] तारतम्यधीर्भवेत्स कालोऽद्य चिराय वाऽऽवयोः[2] ॥३४॥

इदं[3] वचस्सा सुविचार्य[4] तात्प्रिया त्प्रियाप्रियं[5] तं रुदती[6] सगद्गदम् ।
उवाच हे नाथ! कुतस्त्वयाऽऽहृतो[7] वरोऽयमेतादृशफल्गुनिष्फलः[8]॥
वरो मया याचित एव सत्फलो[9] यथार्थ[10]वृत्तान्तमिमं शृणु प्रिये।
सुखाय पुत्राननदर्शनं[11] पितुस्समामवादीतियोगि[12] नारदः ॥३६॥

---

१. किलेत्यलीके, यतः अद्यायं म्रियते, श्वः असौ, परश्वः अन्यः, वर्षान्तेऽपरः, वर्षशतान्तेऽवरः, इति मृतिकाले यत्तारतम्यं प्रतीयते तदाभासमात्रम् । वस्तुतः न । कुतः ? पाञ्चभौतिकस्य देहस्य प्रतिक्षणमुत्पत्तिनाशौ शास्त्रसिद्धौ । आत्मनस्तु न कदापि नाशो वा उत्पत्तिर्वा भवति । अतः काले तारतम्यधीः अलीकेति 'किल'-निपातार्थः। २. यद्यपि मृतिकालस्सर्वेषां सम्भवति, तथापि प्रकरणमनुसृत्याऽऽवयोरिति मृत्यवधारणनिश्चयः स्वभार्यायाः उद्विग्नचित्तसमाधानार्थमङ्गीकृतः। ३. वैराग्योत्पादकं पत्युर्वचनम्। ४. सम्यगालोच्य। ५. स्नेहेन। ६. दुःखिता-"प्रियात्-रुदती"इति परस्परविरुद्धार्थकशब्द-प्रयोगः कथमत्र सङ्गच्छते इति चेत्, पत्या सह सल्लाँपविषये प्रियं-प्रीतिः। सल्लाँपाविष्कृतपुत्रत्यागविषये रोदनं - शोकः इति समञ्जसोत्तरं भवेत्। ७. प्रार्थितः। ८. प्रत्यक्षतः आवाभ्यामनुभूयमानदुःख-हेतुकः-निस्सारः फलशून्य इति समासपदार्थः । ९. मया याचितः वरः फलयुक्त एव फलन्तु पुत्रमुखदर्शनमात्रम्। १०. तत्वार्थम्। ११. जातस्य पुत्रस्य मुखदर्शनमात्रं पितुः सुखप्रदम्। १२. योगी-तत्ववित् - सर्वत्र सर्वदा तत्वदर्शीति यावत् ।

चिरं स जीवेद[1]चिरात्प्रयातु[2] वा सुतोदय[3]ः केवलमाश्रितो[4] मया।
न वेत्सि तत्त्वं[5] सुतमोहा[6]विह्वला त्वमित्यवोचत्तरुणीं[7] स धीरधीः[8]॥
त्वया त्वयाच्ञा[9] वरमित्य[10]वैमि हा वरं नु[11] याच्ञा दुहिता भवेदिति।
प्रयातु[12]मर्हा[13]त्सुतजन्मनोऽत्र ते तथा त्वया किं न कृतं[14] निबोध मे॥

---

१. शतमानं भवतीत्यादिना बहुकालपर्यन्तं अत्र शरीरधारणं कुर्याद्वा। २. जननोत्तरक्षणमेव म्रियेत वा। ३. पुत्रस्य जन्मैव। ४. प्रार्थितः याचितः। ५. यथार्थस्थितिम्। ६, मम पुत्रःम्रियते इत्याद्यज्ञानजातस्नेहपरवशधिया। ७. त्वं युवती अतः तत्वानभिज्ञा-विषयपरवशेत्याकूतम्। तरुणीति 'तॄ' धातोः उरन् प्रत्ययेन निष्पन्नं रूपम्। ८, धैर्यवान् - तत्त्ववित् धिया रातीति ईरतीति वा धीरः इत्युक्तत्वात्। धीरस्य धीरिव धीर्यस्य सः, इति लुप्तोपमा। अनेन राजा स्वयं विवेकशाली - भार्या तु विवेकरहितेत्युक्तम्। ९, तु - अयाच्ञा इति सन्धिविभक्तिः। अत्र प्रकरणे पुत्रस्य वा पुत्र्या वा प्रार्थना याच्ञा, तन्न भवतीति, अयाच्ञा - प्रार्थनाऽकरणम्। १० अयं ममाभिप्रायः इत्यभिसन्धिः। ११, नु इति स्वस्याभिम-तद्योतनम्। १२. मर्तुम् - प्राणान् हातुम्। १३. नियुक्तात्। १४. नाचरितम् - ममापत्यमेव मा भूत्, यदि दैवाद्भवेत् दुहिता जायेत - इत्यपेक्षा तव किं न जातेत्याकूतम्।

तयेति[1] पृष्टो विमलात्मभार्यया[2] जनिर्विनिन्द्या[3] दुहितुस्स्मृता[4] पितुः।
न लोक एवाऽस्त्यसुतस्य[5] शास्त्रतो[6] वृतो[7] मयातः सुत इत्युवाच सः॥

कथं विनिन्द्या दुहिता विचार्यतामहं[8] पितुर्मे[9] दुहिताऽस्मि[10] किं ततः।
कुतो न निन्द्याऽस्तु[11] तथेति[12] चेत्कथं भवामि भार्या[13] तव शस्यजन्मनः[14]॥

---

१. इति उक्तप्रकारेण। २. विमलः-निष्कपटं आत्मा-मनः यस्यास्सा-सा च सा भार्या च तया। ३. विशेषेण निन्दार्हा। ४. कैश्चित्तत्वज्ञैः काभिश्चिच्छ्रुतिभिश्च। ५. अपुत्रस्य। ६. श्रुतिस्मृत्यादितः। ७. ममसुतोभूयादिती वरो याचितः। ८. मद्-बुध्या स्तुत्या न निन्द्यैव। एवं स्थिते विशेषनिन्द्येति कथं वदसीति तात्पर्यम्। ९. स्वयमेव सम्यगालोच्य विचारं कुरु। मूढवत्केवलश्रद्धा-जाड्यवान् मा भूः इति साकूतवचनम्। १०. दुहितैव जाता न तु पुत्ररूपेण। ११. तर्हि अहं मत्पितुः कुतो न निन्द्या। १२. निन्द्यैवेति चेत्। १३. अहं तव भार्या भवितुं योग्या भवामि किल। पश्य "सा भार्या या गृहे दक्षा सा भार्या या प्रजावती। सा भार्या या पतिप्राणा। सा भार्या या पतिव्रता" इति दर्शिता ननु। १४. शस्यजन्मनः—स्तुत्यजन्मवतः। निन्द्याऽनिन्द्यस्य शस्याऽशस्यस्य भार्या भवेद्यदि तदुचितम्। निन्द्या शस्यस्य भार्येत्यनुचितम्। धीरोऽपि तत्वविदपि त्वं मां कथमुदवहः? इत्यपह्नवोक्तिः।

वदन्ति कन्याः कुलतारिका[1] इति श्रुतेर्हि[2] मन्त्रार्थविदोलमुद्वहे[3] ।
यदि श्रुतेर्भेद[4] इहाऽऽदृतो[5] भवेत्तदा प्रमाणं[6] वद सा कथं श्रुतिः॥
ब्रुवन्ति चेत्स्त्रीजनि[7]रेव निन्दिता तदात्र सर्वे पुरुषा भवन्तु हा[8] ।
तदास्तु पुंसां जगतीह पूरुषैः विवाह[9]योगैः[10] पुमपत्य[11]सन्तति[12]ः ॥
द्विधाऽऽस[13] कृत्वा स्वशरीरमीश्वरो वधूस्तदर्धेन तदर्धतः पुमान् ।
अभूत्तयोः सृष्टिरियं[14] तदाऽभवत्प्रसिद्धि[15]रेवं मनुना कृतास्त्यहो[16]॥

---

१. वधूवरयोरुभयवंशोत्तारिकाः कथम् ? एकेन कन्यादानेन कन्यायाः पितृपितामहाद्याः चिरकालं दिव्यलोकेषु सुखमनुभवन्ति । तथा भर्तृवंशे पुत्रपौत्राद्युत्पत्तिद्वारा तद्वंशोद्धारिकाः भवन्तीति विवाहकाले कन्यादानमाहात्म्यं प्राकाश्यते २, सम्बन्धार्थे षष्ठी श्रुतेस्सकाशादिति पञ्चमीविभक्तिर्वा । ३. विवाहकाले । ४. अर्थभेदः पुत्रीपुत्र-प्रशस्तिविषये । ५. एकाश्रुतिः "पुत्रं ब्रह्माण इच्छध्वम्" इति पुत्र-प्रशस्तिम् अन्या श्रुतिः दुहितृप्रशस्तिं शास्तीति भेदः । आदृतश्चेदेष भेदः । ६. श्रुत्योर्भेदे कतरस्या निश्चयज्ञानं भवेदित्यर्थः । ७. स्त्री-जन्म । ८. हेति खेदे - तथा कदापि मा भूदित्यर्थः । ९. उद्वाहः । १०. संयोगः । ११. पुत्रोत्पत्तिः । १२. वंशोऽपि केवलं पुंरूपः । १३. "द्विधा कृत्वात्मनो देहमर्धेन पुरूषोऽभवत् । अर्धेन नारी तस्याऽऽसीत्" इति मनुस्मृतौ प्रथमाध्याये सृष्टि प्रकरणे प्रदर्शितम् । १४. परिदृश्यमाना । १५. जगत्सृष्टौ स्त्रीपुंयोगेनैव सर्वप्राणिना-मुत्पत्तिरिति प्रतीतिः । १६. अहो इत्याश्चर्ये - अत्राश्चर्यं पुंसां पुम्भिरेव विवाहादिकं कदापि न सम्भवति । अतस्तथा वादः अज्ञान-प्रदर्शकः - अनुभवविरोधीति विचारजन्यम् ।

स्त्रियाः प्रशंसा बहुधा कृताऽस्त्यहो हितेन तेनैव[1] सुसूक्ष्मदर्शनात्[2] ।
अतः स्त्रियो लोकसुधारणाय[3] भो विलोकय[4] त्वं प्रियमातनुष्व[5] मे ॥
स्त्रियोऽत्र मूलं जनसंख्यया[6] जगद्विवर्धने तेन[7] विवर्धिताः परे ।
गवादिकै[8]क्ष्यादिसमस्तजन्तवो[10] प्रियाःस्त्रियश्चानु[11]भवन्ति सन्ततम्[12] ॥
स्त्रियोऽत्र वाणीव[13] लसन्ति विद्यया विभान्ति लक्ष्मीरिव[14] रूपसम्पदा ।
भवन्ति गौरीव[15] सुमङ्गलैस्सदा शचीव[16] लोकेषु सुमानिता हिताः[17] ॥
अरुन्धतीव[18] श्रुतभर्तृसेवया[19] विशुद्धसीतेव[20] गुणैर्विराजिताः[21] ।

---

१. मनुनैव । २. स्त्रीसृष्टिप्रयोजनं सम्यग्विदित्वा । ३. लोकस्थितये । ४. मयोक्तदृष्ट्या परिभावय । ५. दुहितृनिन्दापरित्यागेन मम हितम् । ६. प्राणिनां संख्यां भूयो भूयस्समुत्पत्तिद्वारा अधिकां कर्तुमिति भावः ७. एतत्कारणेन । ८. गोमहिषादयश्चतुष्पदाः । ९. मयूरशुकपिकादयो द्विपदाः । १०. कृमिकीटादयश्च । ११. वाक्यद्वयसमुच्चयार्थकः । १२. सन्ततानुभवः-संसारिणां जनानां नानाविधगृहकृत्येषु, पश्वादीनाम् एकत्र वासेन घासादिचर्वणेन स्पर्शनकण्डूयनादिना भवत्येव । १३. समस्तविद्याभिमानिनी देवता । १४. समस्तरूपसौन्दर्याभिमानिनी देवता । १५. समस्तशुभोदर्काभिमानिनी देवता । १६. त्रैलोक्यराज्ञी १७. प्रीतिदायिन्यः । हि-ताः इति वा पदच्छेदः । १८. वसिष्ठस्य पत्नी । १९. पतिशुश्रूषायां सुप्रसिद्धा । अत एव "त्वयापि अरुन्धतीव पतिव्रतया भवितव्यम्" इत्यनुसन्धानेन विवाहदिने वध्वाः अरुन्धतीदर्शनं यद्विहितं तदपि स्मारितं भवति । २०. अयोनिजा - अग्निशुद्धा - अतः विशुद्धा सीता जनकस्य पुत्री,-दशरथस्य स्नुषा,-रामस्य महिषी । २१. सर्वानवद्यवधूजनोचितपतिनिष्ठादिसुगुणैः ।

सती सतीव[1] प्रियरक्षणाय[2] सा कुलस्य गोत्री[3] सकलेषु वत्सला[4]।।
इति ब्रुवाणां स्वसतीं विलोकयन्नुवाच भूपस्सदय[5]श्शुचि[6]स्मितः।
सुतोऽत्र जातो[7] हि किमद्य[8] चिन्तया विभाव्यता[9]मुत्तरकार्य[10]मादरात्[11]।।
किमुत्तरं[12] दास्यामि[13] दातुमर्हसि त्वमेव पुत्राननवीक्षया[14] सुधीः[15]।
इति प्रियावाक्यविचार[16]मानसं तमेव देवो वरुणोऽब्रवीत्पुनः।।
विलासलोलौ[17] सुतवत्सलौ[18] युवां वृथैव[19] कालव्ययतो[20] ममेष्टदम्[21]।
यदस्ति तद्विस्मरसि क्षमे[22]ऽद्य तद्यजस्व राजन्नचिरात्[23]सुतेन माम्।।
निशम्य राजा वरुणस्य भाषितं[24] पुनस्तमाभाषयितुं प्रचक्रमे।

---

१. पतिव्रता सावित्री। २. पतिप्राणप्रदानाय। ३. वंशरक्षणक्षमा। ४. दयावती। ५. सानुकम्पस्सन्। ६. शुचि-परिशुद्धभावेन कृतं स्मितं-हसितं यस्य सः-हसन्मुखस्सन् इति तात्पर्यम्। ७. सुजातः खलु। ८. न किमपि प्रयोजनं भवतीत्यर्थः। ९. आलोच्यताम्। १०. इतः परं कर्तव्यम्। ११. त्वं विवेकशालिनी उत्तरकार्ये मां उपदेष्टुमर्हसीति गौरवप्रदर्शनोक्तिः। १२. पुत्ररक्षणाय। १३. दातव्यम्। १४. पुत्रमुखदर्शनाभीप्सया। १५. समीचीना धीः यस्येति काकुः- १६. स्वभार्यया समुदितं समञ्जसं भवति। मयैव पुत्रार्थं वरः प्रार्थितः। पुत्ररक्षणार्थं समुचितमुत्तरं मयैव दातव्यमिति राज्ञि विचारपरे सति, तमिति तात्पर्यम्। १७. दम्पती विनोदसँल्लापे रतौ। १८. पुत्रः। कथमपि न परित्याज्यः इति प्रीत्या युक्तौ। १९. निष्प्रयोजनम्। २०. कालक्षेपेण। २१. मम प्रीतिकरम्। २२. तवापराधमहं क्षमे। २३. अविलम्बेन। २४. भाषणम्।

स्मरन्ति वाग्दत्त[1]मलं[2] हि साधव[3]स्तदेव[4] भो देव ममाद्य चिन्तनम् ॥
तदास्ति राजन्यशिशोर्हि योग्यता यदा धनुर्वेदविलास[5]पाटवम् ।
तदस्तु[6] पुत्रस्य सुखेन पूजये[7] समीहितं[8] मे कृपयाऽनुमोद्यताम्[9] ॥
इति ब्रुवाणं वरुणोऽथ भूपतिं तथा कुरुष्वेति जगाद सादरम्[10] ।
अमोदिषातां[11] वचनं निशम्य तौ[12] शुभावहं[13] कस्य वचो न तुष्टये[14] ॥
यदा धनुर्वेदविदाऽऽस रोहितस्तदा नृपं तं वरुणो ह्यबोधयत्[15] ।

---

१. वाचा प्रतिज्ञातं यत् । २. अतन्द्रिताः सन्तः । ३. सत्यसन्धाः-न तु वञ्चकाः इति ध्वनिः । ४. वरुणं - करुणार्द्रहृदयं कर्तुं 'भो देव' इति सम्बोधनद्योतकपदं प्रकरणस्वारसिकम् । तत्-तदेवेति पदेन शब्दालङ्कारशोभितश्च वर्तते । ५. धनुर्वेदविलासस्तु - प्रथमं धनुर्वेदं सम्यगभ्यस्य तत्प्रयोगविषये समुत्साहः-तत्र पाटवं-कलाकौशलं-प्रभविष्णुता वा - यदा भवतीत्यध्याहारः । ६. तत्पाटवं जायताम् । ७. तदा तेन त्वां यक्ष्ये, इति तात्पर्यम् । ८. प्रार्थनाम् । ९. त्वं अनुमोदस्वेति कर्त्रर्थे कर्मणि प्रयोगः गौरवार्थबोधकः । मुदधातुरकर्मकोऽपि, 'अनु' इत्युपसर्गपदबलेन सकर्मको भवति । १०. बहुवारं कालविलम्बात्, जुगुप्सितोऽपि प्रीतिमानेव सः, न तु विकलहृदयः । देवानामयं सुगुणः भक्तहिताय । ११. लुङि प्रथमपुरुषद्विवचनम् । १२. दम्पती । १३. शुभप्रदम् - बहुकल्याणकरमिति यावत् । १४. तोषाय । कस्य न तुष्टये इति निषेधबोधकप्रश्नेन सर्वस्यापि तुष्टिर्भवत्येवेत्यवधारणं भवति । १५. तस्य प्रतिज्ञां स्मारयति स्मेति तात्पर्यम् ।

सुतेन मामद्य यजस्व भूपते कृती[1] भव त्वं प्रथया विशुद्धया[2] ॥
निशम्य राजेदमथाह्वयत्सुतं यथा[3]ऽवदासन्नकीर्तिं[4] न्यबोधयत्[5] ।
सदा प्रतिज्ञा[6]विरहा[7]द्धि भीरवः[8] कृतप्रतिज्ञा[9]स्ससमयेन[10] भूषिताः[11] ॥
अयि प्रिय त्वं वरुणप्रसादतो मम प्रियाया हृदया[12]दजायथाः ।
अभूत्तदानीं समयश्च तेन[13] मे त्वया यजेऽहं स्वसुतेन तं ध्रुवम्[14] ॥
मम प्रतिज्ञां तव देहमोचना[15]त्सुसाधयस्व[16] प्रियमातनुष्व[17] मे ।

---

१. कृतकृत्यः । २. प्रतिज्ञापालनेन यस्य कस्यापि प्रथा-कीर्तिर्विशुद्धा निर्मला भवति-अतः विशुद्धयेति विशेषणम् । ३. वरुणस्य वचः । अचिरादेव वरुणेनोक्तं सर्वं मनसि नवनवं सत् पुनः पुनः अभिव्यज्यत इति प्रत्यक्षमिव निदर्शनार्थं 'इदं'पद प्रयोगः । ४. पुत्र-जननादारभ्य यद्यदापतितं तत्सर्वम् । ५. प्रकृतकार्यम् । ६. सम्य-ग्व्यवृणोत् । ७. भङ्गात् । ८. भीतमानसाः । ९. प्रतिज्ञां निर्वर्तयन्तः । १०. सकाले इति प्रतिज्ञानिर्वर्तने अन्वयः । अथवा राज्ञः वरुणेन सह कृतः यस्समयः तत्करणे वा अन्वयो भवेत् । ११. लोकप्रसिद्धा भवन्तीति तात्पर्यम् । १२. "दम्पत्योर्हृदयग्रन्थिरपत्यमिति कथ्यते" इति महाकविभवभूतिवचनमनुसन्धाय, मम-तव पितुः प्रियायाः-तव मातुः, हृदयं - प्रीतिसर्वस्वं त्वमित्याकलनेन, 'पतिर्जायायां जायते पुत्ररूपेण' "तज्जाया जाया भवती"त्यादि श्रुत्यर्थसङ्ग्रहस्सम्पादितो भवति । १३. वरुणेन । १४. ध्रुवमिति स समयः अवश्यं पालयितव्य इति निश्चितार्थे प्रयोगः । १५. शरीरत्यागात् । १६. सम्पादयस्व-निर्वर्तयेति यावत् । १७. 'आ' इत्युपसर्गः सम्पूर्णार्थकः-त्वया एवं कृते मम सम्पूर्णं प्रियं भवतीति तात्पर्यम् ।

पितुस्सुपुत्रास्सततं[1] विधेयता[2]धिया यथोक्तं[3] स्वहिताय[4] कुर्वते ॥
श्रुत्वा वाचं धीरधी[5]स्सान्त्वनाय[6] प्रोक्तां पित्रा स्वाऽहितां[7] प्राणहानात् ।
नत्वा[8] धन्वी[9] रोहितो राजमौलि[10]स्त्यक्त्वा गेहं कानने सञ्चचार ॥
॥ इति श्रीवेङ्कटरमणार्यकृते काव्यसमुदये वैदिके "हरिश्चन्द्रचरितकाव्ये" पुत्रप्राप्तिर्नाम द्वितीयस्सर्गः ॥

---

१. न तु दुष्पुत्राः । २. विधेयास्सन्तः । ३. स्वपित्रा यद्यदुच्यते तत्सर्वम् । ४. स्वहिताय – स्वेषां शुभोदर्काय । ५. धीरा आपत्स्वपि धैर्यहेतुका - न भयावहेति यावत् - धीः-बुद्धिः यस्य सः । ६. समाधानाय । ७. स्वस्य प्रतिकूलाम् । ८. पितरं विनयात्प्रणम्य । ९. धनुर्धारी - अनेन काननेऽपि असाहाय्येन अस्य सञ्चारयोग्यत्वं सूच्यते । १०. राजश्रेष्ठः-श्रीरामवदरण्ये सञ्चरितुं समर्थः । रामस्सीतालक्ष्मणाभ्यां युक्तस्सन् वने सञ्चचार, अयं तु असहाय एक एव संञ्चचारेति अस्य श्रैष्ठ्यं राजमौळिशब्दार्थेन व्यज्यते । अन्तिमपद्यं "शालिनी"वृत्तनिबद्धम् । तल्लक्षणं-"शालिन्युक्ता म्तौ तगौ गोब्धिलोकैः" इति । अस्मिन् सर्गे-प्रतिज्ञा - तत्पालनं- पुत्रवात्सल्यमित्यादयो विषयाः कथिताः ॥

इति श्रीवेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके "हरिश्चन्द्रचरितकाव्ये" द्वितीयसर्गस्य स्वेनैव विरचिता "गम्भीरपदार्थबोधिन्याख्या" व्याख्या समाप्ता ।

---

# अथ तृतीयस्सर्गः ।

अथायमारण्यनिवासतस्सुखं सुतो हरिश्चन्द्रनृपस्य बुद्धिमान् ।
निनाय कालं शरदां विनिश्चितं पश्यन्विचित्राः प्रकृतेस्सुसम्पदः॥

मातङ्गयूथान्यतितापतृष्णया जलानि पातुं सरसीः प्रपेदिरे ।
शुण्डोद्धृताद्भिस्स्वशरीरमादरादाप्लाव्य ते स्नानविधिश्च भेजिरे॥

---

॥ गम्भीरपदार्थबोधिनी व्याख्या—॥— अस्मिन् सर्गे अन्तिमपद्यं विना तदितरपद्यानि "वंशस्थेन्द्रवंशोपेतपादकलितोपजातिभेदवृत्तनिबद्धानि । तयोर्लक्षणम्"-"जतौ तु वंशस्थमुदीरितं जरौ," "स्यादिन्द्रवंशा ततजैरसंयुतैः ।" इति । १. अरण्यप्रवेशानन्तरम् । २. यथाऽयं वने षड्वर्षपर्यन्तं एक एव कालमयापयत्, तेनैव सः कुशलधीरित्यत्र गम्यते । ३. वत्सरोऽभूत्, द्वौ वत्सरावभूतां, त्रयस्संवत्सरा अभूवन्, इति संवत्सरसंख्यया विनिश्चितम्, दृढीकृतम् । ४. मातङ्गनां संख्या बहुलेति "यूथानी" ति बहुवचनेनैवावगम्यते । ते सर्वे एकत्रैव जग्मुरित वक्तुं न किमपि गमकं भवति-प्रत्युत भिन्नप्रस्थानैस्सञ्चरमाणा अभवन्निति निर्देशाय गन्तव्यदेशान् प्रति "सरसीः" इति बहुवचनप्रयोग एव स्मारकं भवति । तासु विद्यमानोदकस्य बहुविधत्वात् "जलानी"ति बहुवचनप्रयोगोऽत्र युज्यते । ५. सरांसि । ६. आह्लादकरत्वात्-प्रीतिभावात् । ७. स्नपयित्वा ।

तीरस्थपीता[1]र्जुनरोहिता मृदः[2] करै[3]र्गृहीत्वा तिलकाश्चितानि ते ।
फालान्यलंचक्रुरतीवचापलात्[4]दुत्पाटिताब्जानि शिरस्सु चक्रिरे[5] ॥
जलं पिबन्तो[6]ऽत्र [7]वितेनिरे मुहुर्जलं किरन्तः[8] कृतलीलया गजाः ।
निमीलय चक्षूंषि जपं विधाय[9] तान्युन्मील्य सन्ध्याविधिमर्क-
दर्शनात्[10] ॥४॥

तथा पुनस्तीर्थमवाप्य हर्षतो बिसा[11]न्यदन्तो बहुतुष्ट[12]मानसाः ।
द्विजानुकृत्या[13]ऽत्र विभाविता[14] द्विपा दृष्टाः कदाचित्पथि रोहितेन ते ॥
कुरङ्गबृन्दं स ददर्श रोहितो घासं[15] घसत्[16]तापवशात्समुत्प्लुतम्[17] ।

---

१. सिताम् । २. अत्र 'मृद' इति बहुवचनप्रयोगे जलानीत्यत्र यदुक्तं तदेव कारणं वेदितव्यम् । ३. शुण्डैः । ४. विनोदार्थं-वस्तुतः क्रीडयैव सर्वेऽप्येते व्यापाराः कृताः, न तु ब्राह्मणवद्बुद्धिपूर्वकं नित्यकर्मानुष्ठानार्थम् । ५. आत्मनेपदप्रयोगः । ६. आचमनरूपं कर्म कुर्वन्तः । ७. लिडात्मनेपदि बहुवचनरूपम् । ८. प्रोक्षणकर्म कुर्वन्तः । ९. जपकर्म कृत्वा । १०. सूर्योपस्थानात् । ११. मृणाळानि । १२. मोदं प्राप्ताः-हृष्टाः इति यावत् । १३. कर्मठब्राह्मणकर्मानुष्ठानानुकरणेन । १४. उत्प्रेक्षिताः । १५. बालतृणम् । १६. अदत्-नपुंसके रूपम् । १७. समीचीनानि उत्प्लुतानि यस्मात्तत् इति पञ्चमीबहुव्रीहिसमासेन साधितमिदं रूपं न तु कर्मधारयकृतम् । कुरङ्गबृन्दपदस्य विशेषणघटनापादकम्-कुरङ्गोत्प्लुतानां समीचीनत्वं सर्वत्राङ्गीकृतम् । तथा चाह-कविपुङ्गवः कालिदासः-"वियति बहुतरं स्तोकमुर्व्यां प्रयाति" इति ।

महीरुहच्छायं[1]मुपेत्य तत्क्षणं[2] सुष्वाप बभ्राम[3] पुनर्विनोदतः[4] ।
कासार[5]नीरे परहंससंहतिः पक्षान्विसार्य प्लवते स[6] लीलया ।
मत्स्यानधोऽधो[7] जलमाहरन्मुखै[8]स्ससार[9] मन्दं[10] सरसीरुहां[11] वने[12] ॥

---

१. महीरुहाणां बाहुळ्यात् 'छाया बाहुल्ये' इति व्याकरणविधिमनुसृत्य च्छायमिति नपुंसकप्रयोगः । २. सुष्वापेत्यस्य क्रियाविशेषणम् । महीरुहच्छायोपगमनानुक्षणमेव स्वापः आतपकृततापात्, बहूत्प्लवकृतश्रमाच्च स्वभावनिमित्तकः । ३. भ्रमणकार्यं स्वापादुत्थानानन्तरं कृतम् । ४. तथा भ्रमणस्य विनोद एव कारणम् । इदं बभ्रामेत्यस्य क्रियाविशेषणम् । सुप्तोत्थितस्य मनः निर्मलं समुत्सुकञ्च भवति । ५. अस्मिन् श्लोके-'रे रे र र्य र र र' इति रेफस्य सप्तकृत्वः, सा सा स स स सी'-इति सकारस्य पञ्चकृत्वः 'प प प्ल' इति पकारस्य त्रिः, सान्तरसमानव्यञ्जनप्रयोगाच्छेकानुप्रासः । स सं स सा, ली ल धो धो इति निरन्तरसमानव्यञ्जनप्रयोगात् वृत्यनुप्रासः, अथवा अक्षरानुप्रासः । कासार - ससारपदयोः 'सार' 'सार' इति वर्णसंघातावृत्या शब्दार्थभेदात् यमकः । अधोऽधो इति शब्दार्थयोरभेदाल्लाटानुप्रासश्च बोध्याः । ६. स्माऽतीते इति लड्योगे भूतार्थबोधकोऽयं निपातः । ७. उपर्यध्यधसस्सामीप्ये इति द्विर्भावः । तद्योगे द्वितीया । जलस्य समीपाधस्थितानित्यर्थः । ८. तुण्डैः—"वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्" इत्यमरः । ९. सृ-सरणे इति भ्वादिगणधातोर्लिटि रूपम् । १०. हेलया । ११. कमलानाम् । १२. षण्डे ।

मयूरमाला तरुवृन्दमध्यतः केकारवं श्राव्यं[1]मुदञ्चयन्त्यहो[2] ।
विस्तार्य बर्हींषि मनोहराणि[3] सा मनोऽस्य नृत्येषु जहार पश्यतः[4]॥
इत्थं वनेऽस्मिन् चरति प्रिये[5] सुते नृपे वियोगेन सुतस्य विह्वले[6] ।
देवोऽपि कोपाद्वरुणश्शशाप तं नृपं प्रतिज्ञाविरहेण[7] दूषितम्[8] ॥
महोदरेणा[9]ऽत्र सुदुःखदेन[10] भो राजन् कृतघ्न[11] त्वमलं प्रबाधितः ।
जानासि मे शक्तिमथेति सोऽब्रवीद्देवापराधो[12] बहुदुःखदो नृणाम्॥
रोगेण तेनायमहो[13] नराधिपो[14] रागेण[15] भोगेन[16] विनाकृतस्सुधीः[17] ।
हित्वान्नपाने बहुदुःखकर्षणादघं[18] स सस्मार कृतापराधजम्[19] ॥११॥

---

१. मनोहरम् । २. कुर्वती-उत्पूर्वकात् अञ्चूधातोर्णिजन्तात् शतृप्रत्ययेन स्त्रीलिङ्गे रूपम् । ३. नानाविधवर्णसमवेतत्वाद्रम्याणि । ४. कुतूहलेनेक्षमाणस्य । ५. देववरेण जातत्वात् पित्रोरभिनन्दनीये । ६. व्यथया युक्ते । ७. भङ्गेन । ८. तिरस्कृतम् - असाधुत्वेन भावितम् । ९. एतन्नामकरोगेण । १०. अत्यन्तपीडाकरेण । ११. कृतम्-उपकारं – पुत्रप्राप्तिवरप्रदानरूपं - हन्ति - नाशयति, प्रतिज्ञाभङ्गेनेति कृतघ्नः—तस्य सम्बोधनम् । १२. देवेषु कृतः अपराधः । १३. नराधिपोऽपि रोगेण पीडित इत्याश्चर्यद्योतकः । १४. सोऽयं नराधिपः न तु सुराधिपः अत एव देवापराधं तर्तुमक्षम इति काकुः । १५. विषयेषु स्नेहेन । १६. विषयोपभोगेन । १७. समीचीनबुद्धियुक्तोऽपि इति स्तुतिनिन्दाऽत्र व्यज्यते । १८. पापम् । १९. प्रतिज्ञाभङ्गरूपापराधाज्जातम् ।

हा देव मे त्वं नु कुतोऽददा[1] वरं हा पुत्र जातोऽत्र कुतो ममोदरात्[2] ।
हा देवि माताऽसि कुपुत्रकस्य[3] किं हतो[4]ऽस्मि हा हा बत[5] मोहतामसः[6] ॥१२॥
इत्थं रुदन्तं नृपमीक्ष्य दुःखितं कश्चिज्जनो रोहितवास[7]भूतलम् ।
अवाप्य तं श्रावयति[8] स्म रंहसा[9] पितुस्सुदुःखं वरुणाहितं बलात्[10] ॥
हा तात मत्कारणतस्त्वमालये[11] महोदरेणासि सुतोदये[12]ऽर्दितः ।

---

१. 'अददाः' इति लङ् मध्यमपुरुषैकवचनम् । २. शरीरादित्यर्थे अङ्गेनाङ्गिनो निर्देशः । ३. पुत्र एव पुत्रकः, अल्पार्थे, अनुकम्पार्थे वा 'क' प्रत्ययः । कुत्सितः पुत्रकः कुपुत्रकः अविधेयपुत्रक इति भावः । ४. व्यर्थजन्मा । ५. बतेति स्वकृत्ये विषादद्योतको निपातः । ६. पुत्राभिमानेन ज्ञानशून्यः । हेति सर्वत्र दुःखसूचको निपातः । ७. अरण्ये यत्र रोहितः स्थितः तत्प्रदेशमित्यर्थः । ८. 'श्रु' धातोः णिजन्तरूपम् । ९. वेगेन — शोकवार्ता बन्धुभ्योऽविलम्बेन श्रावयेदिति । १०, वरुणस्य कोपेन प्रापितत्वात् बलादित्युक्तम् । ११. गृहे स्थितोऽपि । अत्र देवापराधतः गृहस्थितस्याऽपि दुःखमनिवार्यं - देवानुग्रहतः वने स्थितस्यापि सुखं भवतीति ध्वनिः पितृपुत्रयोर्विषये ग्राह्यः । १२, पुत्रे जाते । मज्जन्मकारणात्तव दुःखप्राप्तिरित्यात्मनिन्दाप्यत्र व्यज्यते ।

हतोऽहमस्मीति[1] रुरोद रोहितः प्रेमैव[2] बध्नाति[3] मनांसि देहिनाम्॥

गृहाय गन्तुं वनतस्स[4] रोहितस्तदानुमेने[5] पितृदर्शनाय हा।

तस्मिन् सुदूरं पथि दुर्दशे[6] गतेऽभ्यगात्तमिन्द्रः[7] पुरुषाकृतिर्द्विजः[8]॥

---

१. दुष्टजन्मास्मि। जीवतो मे कदापि न किञ्चित्सुखं भविष्यतीति स्वेनैव स्वात्मा तिरस्कृतः। २, स्नेह एव परस्परसम्बन्धं कल्पयित्वा परस्परसुखदुःखानुभवहेतुर्भवतीति लोकानुभवनिदर्शनम् अर्थान्तरन्यासेन प्रकाशितम्। अनेन सुखदुःखमूले स्नेहे विद्यमानेऽपि निर्मलान्तःकरणो मनुष्यः शान्तिसुखमनुभवतीति तत्वमपि ध्वन्यते। ३. संयोजयति। ४. वनतः-पञ्चम्यर्थे 'तसिल्' प्रत्ययः। ५. अङ्गीचकार। ६. दुष्टाः-स्वस्य गृहपरित्यागः, पितुर्महोदरबाधः, मातुः उभयदुःखदुःखिता, एवंरूपाः दशाः अवस्थाः यस्य तस्मिन्। ७. 'इणो गा लुङि' इति सूत्रेण 'इण्' धातोः अभीत्युपसर्गयुक्तं लुङि रूपम्। ८. द्विजशब्दः ब्राह्मणक्षत्रियवैश्यभूतवर्णत्रयबोधकोऽपि, प्राधान्येन प्रकरणवशादत्र ब्राह्मण एवान्वेति।

सुखाय दुःखाय तदिन्द्रदर्शनं[1] न ज्ञातमज्ञेन[2] हि रोहितेन हा[3] ।
सुखं हि दुःखं कलयन्ति[4] मानवादुःखं सुखं[5] भावि[6] न जानते यतः ॥
इन्द्रोऽस्य सद्ब्राह्मण[7]वेषतः पुरो मुदा स्थितस्सन् तमुवाच सादरम् ।
श्रद्धत्स्व भो[9]स्त्वं नु यदुच्यते मया श्रद्धालवो मङ्गल[10]माप्नुवन्त्यलम्[11] ॥

---

१. सुखाय वा दुःखाय वेति उभयत्र पदन्ति 'वा' शब्दोऽध्याहार्यः— इन्द्रदर्शनं सुखप्रदं वा दुःखदायकं वेति । २. अज्ञेन-निश्चयज्ञानरहितेन । यद्यपि रोहितस्सुधीः, सुधीरः, बुद्धिमान्, इत्यादिविशेषणैर्बहुधा प्रशंसितः । तानि विशेषणान्यस्मिन् सार्थकान्येव तथाप्यस्मिन् सन्दर्भे सः अज्ञ एवेति न विरोधः । 'न हि सर्वस्सर्वं जानाती'तिन्यायमनुसृत्य स इदानीं भविष्यविषये अज्ञ एव । कुतः ? रोहितेन स्वगृहे पितृदर्शनमाकांक्षितं, तत्सुखमिव ज्ञातं तदिन्द्रदर्शनेन प्रतिबध्यत इति दुःखमिव भावितम् । इन्द्रेण रोहिताय वनवासः उपदिश्यते, तच्च दुःखमिव ज्ञायते, तच्च रोहितेन सुखमिति न ज्ञातम् । अतोऽयं क्लिष्टविषयः, अस्मिन् विषयेऽनुभवात्पूर्वं इदमित्थमिति निश्चेतुं अयं न शशाकेति तात्पर्यम् । ३. 'हे'ति शब्दः सर्वत्र धीरोऽप्यत्राज्ञोऽभूदिति विषादसूचकः । ४. जानन्ति । ५. व्यतिरिक्तभावेनेत्याकूतम् । ६, भविष्यम् । ७. उपकारकतया ब्राह्मणस्य सदिति विशेषणम् । ८. इदं - "श्रदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्या" इति वार्तिकेन श्रत्पूर्वकधाधातोर्लोडात्मनेपदे मध्यमपुरुषैकवचनरूपम् । ९, अवधानाकर्षणाय सम्बोधनम् । १०. अभ्युदयम् । ११. पर्याप्तम् ।

श्रान्ताय[1] कष्टैस्स्वयमेव यात्यहो लक्ष्मी[2]रनाश्रान्त[3]नराय नोत्सुका[4] ।
इति ब्रुवन्त्यत्र तपस्विनो[5] जना स्तदेव[6] तत्त्वं शृणुमो वयं[7] चिरम् ॥
विप्रस्य[8] वाचं स निशम्य रोहितो वनं[9] पुनर्वत्सरमध्युवास हा[10] ।
सत्यव्रताः[11] श्रद्दधते हि सादरं सत्यप्रियाणां[12] वचनेषु निर्भरम्[13] ॥
पश्यन्वने वृक्षलतादिसम्पदः[14] शृण्वन्निनादान् शुककोकिलादि[15]-जान् ।
चरन् सुधैर्या[16]द्गिरिकन्दरादिषु स्थितिं स चक्रे वनवासभूषिताम्[17] ॥

---

१. श्रमजुष्टाय । २. श्रीः सम्पत्, जयः, कार्यसिद्धिर्वा । ३. अकृतोद्यमाय-निद्रातन्द्रादिसम्पन्नाय वा । ४. अनादरा अप्राप्या भवतीति तात्पर्यम् । ५. तपस्विनः-त्रिकालज्ञाः-तत्वविदः । ६.उद्यमशीलस्य कार्यसिद्धिर्भवति अनुद्योगिनः नेति यावत् । ७. इन्द्रोऽपि न केवलमहम, सर्वे अमराः, मनुष्यविषयस्तु कैमुतिकन्यायेन सिद्ध इति भावः । ८. ब्राह्मणवेषधरस्य इन्द्रस्य । ९. "उपान्वध्याङ्" इत्यादिना द्वितीया । १०. वनवासोह्यसुखकरः-तत्र बालको रोहितश्चिरं वसितव्य इति खेदसूचकोऽयं निपातः । ११. सत्यशीलाः । १२. सत्यं प्रियं येषां तेषां । १३. संशयं विना । १४. क्वचित्पल्लवशोभा, क्वचिन्मुकुलसौन्दर्यम्, क्वचित्पुष्पविकासः, क्वचित्फलसमृद्धिः । क्वचित्कुसुमसौरभम् एवमादयस्सम्पदः । १५. आदिशब्देन गानशीलाः या पक्षिजातयः ताः गृह्यन्ते । १६. गिरिषु गुहासु प्रवेशः सञ्चारश्च अतिधैर्यशालिनां साध्यः । रोहितोऽपि तादृश इति सुधैर्यादिति प्रयोगः । १७. रोहितवासेनैव वनस्य भूषणमिति रोहितस्य प्रभावः प्रदर्शितः ।

एकत्र भेकारवकर्णकर्कश[1]ध्वनिं स मेने कृतकाग्निनालजम्[2] ।
अन्यत्र वृक्षेषु मरुच्चल[3]त्स्वनं ततस्य[4] तन्त्रीजनितेष्टगीतिजम्[5] ॥२१॥
इत्थं निनीय[6]ापरवत्सरं पुनर्गन्तुं गृहं सोऽयतत स्वपैतृकम्[7] ।
इन्द्रः पुनर्ब्राह्मणवेषभागमुं रुध्वाऽध्वमध्ये निजगाद भाषणम् ॥
गेहं न गच्छेश्वर वत्सरं श्रमाच्छ्र[8]मेण सञ्चारवशांघ्रि पादयोः ।
पुंष्टिर्भवेद्रक्तविशुद्धिपाकतो मज्जास्थिदार्ढ्येन ग[11]तिर्हिता पदोः[12] ॥

---

१. कर्णकठोरः । २. सेनासु पटुभटाः अयोनिर्मितानि नाळिकारूपाणि यन्त्रकाणि हस्ते कृत्वा अग्न्युत्पादकद्रव्यमापूर्य चणकाढकमात्राण्ययोगोळकानि तस्य मध्ये निक्षिप्य नाळिकाच्छिद्रे अग्निप्रयोगेण तानि गोळकानि यदा क्षेपयन्ति, तदा 'पटपटा'यित-शब्दाः आविर्भवन्ति किल तादृश शब्दा इव भेकारवाः श्रुतिकटुका इति तात्पर्यम्, तादृशम् । ३. पर्णेषु मध्ये प्रवहद्वायुना उत्पादितम्-मर्मर इति यावत् तम् । ४. ततम् वीणादिकम् । ५, गायकाभिरुच्या समुत्पाद्यं स्वनमित्यर्थः । ६. यापयित्वा । ७. पितुस्सम्बन्धि-पितामहादिसम्बन्धि वा । ८. शीतातपादिबाधावहकार्येषु शरीरे-न्द्रियप्रयोगेण जनितया श्रान्त्या । ९. प्रतिदिनं कॢप्तकाले कॢप्ता-ध्वपरिमितं निश्चिन्तं सञ्चाराभ्यासेन सर्वावयवानां विशेषतः पादयोः पुष्टिर्भवतीति वैद्यशास्त्रप्रतीतिः लोकानुभवश्च । कॢप्तिं विना कृत-सञ्चारस्तु शरीरस्य बाधाजनकः । १०. अनायासकरशक्तिरिति यावत् । ११. गतिः-गमनम् - पद्भ्यां सञ्चार इत्यर्थः । १२. पादशब्दस्य 'पदा'देशः (पदंघ्रिश्चरणोऽस्त्रियां इति कोशश्च) ।

सुखेन वाजीकरणो[1]चितं बलं देहस्य सञ्चारवशाच्च[2] जायते ।
व्यायाम[3]मार्गेषु सदैव देहिनां सञ्चार[4]माहुस्सुलभं सुशक्तिदम्[5] ॥
सुपुष्पिता[6] वाऽत्र लता फलोन्मुखी[7] योषिद्यथा पुष्पवती[8] फलग्राहिः[9] ।
यथाम्बुसिक्ता[10] रशना दृढा[11] भवेत्सञ्चारधारा[12]सुदृढा[13] तनुस्तथा ॥
पापानि नश्येयु[14]रिहैव देहिनां यात्राभि[15]रेवं चरतोऽत्र नियमात्[16] ।
क्षेत्रेषु[17] तीर्थेषु[18] गता पवित्रता[19] पवित्रमेनं विदधाति सन्ततम् ॥
अतो मयेदं कथितं हिताय ते श्रद्धस्व मे वाचि विहाय[20] संशयम् ।

---

१. शरीरे पुंस्त्वसम्पादकशुक्रोत्पादकभैषज्यविशेषकर्म । २. सञ्चरणेन । ३. बलावहविविधक्रीडाकार्यविधानेषु । ४. सायं प्रातश्शुद्धवायुसञ्चारप्रदेशे सञ्चरणम् । ५. बलदम् । ६. पुष्पैस्समृद्धा अथवा सञ्जातानि पुष्पाणि यस्यां सा । ७. फलितुं योग्या । ८. सञ्जाताऽऽर्तवा ९. गर्भधारणे समर्था । १०. नियतकालं जले स्थापिता । ११. बलिष्ठेति यावत् । १२. नियतकालसञ्चारेण बलं जलधारावत् सर्वावयवेषु प्रवहति । १३. तेन शरीरं बलशालि भवतीति तात्पर्यम् । १४. पापनाशे कारणन्तु पुरः प्रदर्शितम् । १५. देवतादर्शनोद्देशेन पापापनोदनार्थं दिव्यक्षेत्रतीर्थाभिमुखप्रयाण-कर्मभिः । १६. अनुभवेन, पौराणिककथाभिश्च निश्चितमित्यवधारणाय हेतुप्रदर्शने पञ्चमी । १७. काश्यादिपुण्यस्थलेषु । १८. गङ्गादि-पुण्यनदीप्रमुखजलाश्रयेषु । १९. पापपरिहारयोग्यता । २०. यदा श्रद्धा जायते तदा संशयो नश्यति ।

वने चर त्वं च[1] तृतीयवत्सरं गृहाधिवासं त्यज रागवेष्टितम्[2] ॥
तद्ब्राह्मणोक्तिं[3] सुनिशम्य रोहितो वनाधिवासे स्वमतिं चकार[4] हा ।
गेहादिरागोऽत्र[5] भवेत्पराजितो बोधेन[6] तत्वार्थविदां सुयोगतः[7] ॥
पश्यन् ततस्सञ्चरति[8] स्म[9] रोहितः पवित्रवस्तूनि[10] वनस्थलेषु सः ।
दिव्यानि भव्यान्यघनाशकान्यलं[11] संसेव्य तोषेण[12] निनाय वत्सरम्[13] ॥
तरङ्गिणीतीरमनुव्रजन्[14] दिने स नित्यकर्माण्यकरोद्यथाविधि[15] ।
स्नात्वाऽत्र तीर्थेषु[16] निपीय तज्जलं कन्दैश्च मूलैस्स चचार[17] भोजनम् ॥

---

१. चकारः तावत्पर्यन्तं कृतसञ्चारस्य समुच्चयार्थकः । २. तृष्णापरिगृहीतम् । ३, ब्राह्मणरूपधारीन्द्रवचनमिति भावः । ४. निश्चिकायेति तात्पर्यम् । ५. अभिनिवेशः । विषयोपभोगतृष्णेति सामान्यार्थे विशेषनिर्देशः । ६. तत्वबोधेनेति यावत् । ७. सङ्गात्-पञ्चम्यास्तसिल् । अत्र गेहादिरागपराजये तत्वविदां सङ्गः बोधश्चेति उभयमपि कारणं प्रदर्शितम् । ८. तृतीयाऽयोगेन नात्मनेपदम् । ९. सञ्चारस्य भूतकालद्योतकः । १०. चित्तशुद्धिकरणसमर्थानि । ११. श्रेयःप्रदानीति तात्पर्यम् । १२. निर्मलान्तःकरणेन - न तु निर्बन्धेनेत्यर्थः । १३. तृतीयवत्सरमिति यावत् । १४. प्राप्तस्सन्निति भूतार्थद्योतकोऽत्र 'शतृ'प्रत्ययः-अन्यथा - अनुव्रजत एव नित्यकर्मानुष्ठा-नाऽसम्भवः । इत्थं प्रयोगः कविसमयाधीनः । १५, स्नानाचमन-सन्ध्यातर्पणादीनि । १६. 'अन्यतीर्थेष्वि'ति पूर्वोक्ततरङ्गिणीव्यावृत्त्यर्थं बहुवचनप्रयोगः । १७. 'चर' धातोः लिटि रूपम् । 'चर गतिभक्षणयो'-रिति धात्वर्थमनुसृत्य भक्षणार्थेऽत्र प्रयोगः ।

गतागतानां[1] स जलेषु यादसां[2] वृत्तिं[3] सवृत्तां[4] सुगतिं ददर्श ताम्[5] ।
प्राणी बली[6] प्राणिनमल्पसारं[7]जं बलाद्गृहीत्वा चरति स्म[8] तत्क्षणात् ॥
वर्षैः कदाचित्तटिनी प्रवाहतो विचित्रवस्तून्[9]यपि वाहितान्[10]यहो[11] ।
उन्मूलितान्[12]अत्र तटस्थपादपान्[13] सन्दृश्य सोऽभूदनुतप्तमानसः[14] ॥
स्मृत्वा पितुर्दुःखमियेष[15] रोहितो गृहाय गन्तुं स ददर्श वर्त्मनि ।
इन्द्रः पुनस्सोऽयमुवाच रोहितं मा[16] याहि गेहं चर वत्सरं[17] वने ॥

---

१, मज्जनोन्मज्जनगत्या केचित् जलस्याधस्सञ्चरन्ति, अन्ये जलतलेषु, अन्ये पुनरधो गताः उपरि प्लवन्ते, उपरिष्ठाः अधो यान्तीति जलचराणां स्वाभाविकगतिरनेन दर्शिता । २. जलचराणाम् । ३. व्यापारं-जीवनं वा । ४. वृत्ताकारम् । ५. बहुकृत्वः बहुभिर्दर्शितत्वात् प्रसिद्धामित्यर्थे तच्छब्दविशेषणम् । ६. बलिष्ठः- जलचरः । ७. स्वल्पबलयुक्तम् - क्षुद्रमिति यावत् । ८. अभक्षयदित्यर्थः । चरधातोर्भक्षणार्थः शास्त्रविहितः । ९. अमूल्यवस्तूनीति यावत् । १०. प्रवाहानुगतानि । ११. विचित्रवस्तूनि नाशितानीत्याश्चर्यं वा व्यसनं वा सूचयति । १२. उत्पाटितान् । १३. पादपान् वृक्षान् । १४. अस्य हृदि अनुतापो जात इत्यर्थः । पिता महोदरेण दुःखित इति प्रथमं यच्छ्रुतं तत्स्मृत्वेति भावः । १५. अपेक्षितवान् । १६. मा याहीति लोटा यानिनिषेधः बोधितः । १७. अधिकमेकं वत्सरमिति यावत् ।

उद्योगशीलस्य[1] हि सन्ततं ध्रुवं लक्ष्मीस्सुवश्या[2] न तु तिष्ठतोऽत्र[3] ।
आलस्यभाजां[4] न सुखं धनञ्च वा कथं भवेत्तस्य तदर्थवर्धनम्[5]॥
वाणिज्यकृष्यादि[6]कवृत्तिसेवया[7] भवन्ति नृणां सकलार्थसम्पदः[8] ।
दिने दिने ताश्च समृद्धिगोचरा[9]स्सदा यापनस्य[10] कदा कथं सुखम्॥
इदं[11] गृहीत्वा[12] वनमेत्य रोहितः प्रशस्तवासाय[13] मनश्चकार हा ।
चतुर्थसंवत्सरमप्यहो वने सुखादुवास[14] स्थिरचित्तवृत्तितः[15] ॥३६॥
तेपे[16] कदाचित्स तपांसि रोहितो जजाप[17] जप्यं सरहस्यमन्त्रकम्[18] ।

---

१. प्रयतमानस्य - गृहीतोद्यमस्येत्यर्थः । २ सम्पत् - कार्य-सिद्धिः-सर्वत्र जय इति तात्पर्यम् । ३. अनुद्यमशीलस्य । ४. अनुद्य-मेन कालयापनक्षमाणाम् । ५. यदा अर्थप्राप्तिरेव न स्यात् तदा तदभिवर्धनविषयः दूरेऽपास्त एवेति भावः । ६. आदिशब्देन जीवितोपयुक्तशिल्पकलादिवृत्तयो गृहीताः । ७. अनुवर्तनेन । ८. अर्थाः प्रयोजनानि तेषां सम्पदः—सम्यक् पद्यन्ते - सम्प्राप्तिरिति तात्पर्यम् । अत्र "सम्पदादिभ्यो भावे क्विप्" - इत्यनेन 'पदऌ'धातोःभावे क्विप् प्रत्ययः । ९. समृद्धिं प्राप्ताः प्रापिता वा । १०. अलसस्येत्यर्थः । ११. इन्द्रोपदिष्टं पूर्वोक्तमभिप्रायम् १२. ज्ञात्वा । १३. वने वासः प्रशस्तः इति निर्धारिताशयवानितिभावः । १४. गृहकृत्यविषयकचिन्तां विना । १५. दृढमनस्कतया । १६. तताप । यद्यपि तपधातोः सामान्येन परस्मैपदप्रयोगः, तथापि-"तपस्तेपे" इत्यादिकविप्रयोगमनुसृत्य "तप-स्तपःकर्मकस्यैव" इति प्रमाणेनात्मनेपदप्रयोगोऽत्र समाहृतः कविना । १७. 'जप'धातोः लिट् । १८. बीजाक्षरपूर्वकं अथवा-तत्वार्थबोधकम् ।

आनर्च[1] देवान् सुखदान् गतिप्रदान् तथोपतस्थे[2] रविमीक्ष्य भक्तितः
शिलां स लिङ्गाकृति[3]मीश्वरं[4] शिवं विष्णुं च देहाकृति[5]माश्रितां
शिलाम् ।
अन्याश्शिलाश्चापि[6] तदन्यदेवता[7] मत्वा[8] तुतोष[9]ान्तरबाह्यपूजया[10] ।।
एकोऽपि देवो[11] बहुरूपभाग्[12]इति स्थिरा[13] मतिस्तं न जहौ कदापि वा ।
तीर्थैस्सुगन्धै[14]र्नवपुष्पराशिभिर्धूपैः प्रदीपैः फलकन्दपायसैः ।
प्रदक्षिणेन स्तुतिशंसनेन[15] तां[16]श्चिरादयं पूजयति स्म देवताः ।।३९।।

---

१. 'अर्च'धातोर्लिट् । २. अत्र "उपाद्देवपूजासङ्गतिकरणदानेषु" इत्यात्मनेपदम् । उपेत्युपसर्गपूर्वक'स्था' - धातोर्लिट् । सूर्योपस्थानं कृतवानित्यर्थः । ३. स्वभावेन वृत्ताकारेण स्थिताम् । ४. सर्वैश्वर्ययुक्तम् । ५. करचरणादिरूपेणाऽवस्थितां-अत्रापि स्वभावात् स्थूलदृशा परिभावितुं योग्यां-न तु शिल्पादिभिः बुद्धिपूर्वकं निर्मिताम् । ६. तद्वदेव देहावयवयुक्ता इव दृश्यमानाः अन्याः शिलाः । ७. विष्णुशिवेतराः गणेशादिदेवताः । ८. परिभाव्य । ९. स्वयमेवातुष्यत् । १०. अन्तः मानसिकध्यानादिना, बाह्यतः अभिषेकादिना । ११. "इन्द्रं मित्रं वरुणमग्निमाहुरथोदिव्यस्सुपर्णो गरुत्मान् । एकम् सद्विप्रा बहुधा वदन्ति," "सुपर्णं विप्राःकवयो वचोभिः । एकं सन्तं बहुधा कल्पयन्ति", "एक एव हि भूतात्मा भूते भूते व्यवस्थितः" इत्याद्याः श्रुतिस्मृतयः । १२. भक्तानामिच्छानुरूपेण । १३. निश्चिता । १४. समीचीनैः श्रीगन्धादिभिः । – १५. स्तोत्रपारायणेन । १६. शिवविष्ण्वादिरूपेण परिभाविता देवता इत्यर्थः ।

लक्ष्यार्थ[1]मेतन्[2]मनसो[3] वितन्यते[4] यत्किञ्चि[5]देवात्र स सर्व[6] एव हि ॥
इच्छाऽस्य जाता स्वगृहाय[7] तं पुनर्विप्रोऽमराणां पतिरेन[8]माह किम् ।
गच्छेः[9] कथं त्वं गृहमिष्टदं नु[10] ते वनेचरत्वं त्यज चापलं[11] गृहे ॥
निद्रां[12] च तन्द्रां[13] च कलिं[14] विभावय त्वमत्र दुःखानि तथा[15] कलौ यथा[16] ।

---

१, ध्यानार्थं यत्किञ्चिल्लक्ष्यत्वेन परिगृह्यते खलु-अन्यथा मनसः चञ्चलत्वात् स्थैर्यं सम्पादयितुमशक्यम् - मनस्स्थैर्यं विना तैलधारावदविच्छिन्नध्यानमनुपपन्नमिति भावः । २. भगवद्रूपेषु किञ्चिद्रूपम् । ३. मनसः लक्ष्यार्थमित्यन्वयः । ४. तनोतेः कर्मणि लट् । ५. "ईशावास्यमिदं सर्वं यत्किञ्चजगत्यां जगत्" इति श्रुतिः । ६. स इति विधेयप्राधान्यात् पुल्लिङ्गेनात्र, निर्देशः । "सर्वं खल्विदं ब्रह्म" इति श्रुत्या । ७. गृहाय गन्तुमित्यर्थः । ८. रोहितम् । ९. किं गच्छेः कथं गच्छेः इत्याक्षेपः । १०. कथं नु इति प्रश्नेन सर्वथा गृहम् इष्टदं न भवतीति मनसि कृत्वा तदभिप्रायः आक्षिप्तः । ११, गृहे सुखं भवतीत्यभिमानम् । १२. सुषुप्तिम्-यत्र न काचित्क्रिया भवति । १३. आलस्यम् येन न किञ्चित्कार्यं क्रियते । १४. अतः तां कलियुगं परिभावय । कलियुगे जनाः न सततोद्योगशीलाः भवन्तीति तात्पर्यम् । १५. निद्रया तन्द्रया वा । १६. कलौ निरुद्योगेन यथा दुःखानि सम्पद्यन्ते तन्द्रया च तथैव दुःखानि भवन्तीत्यर्थः ।

तद्द्वापरं विद्धि तदीय[१]वर्जनं[२] तद्धानतो[३] द्वापरभद्र[४]माप्नुहि[५] ॥४२॥
उत्तिष्ठ[६] चोत्थानमवेहि भूतिदां त्रेतां[८] तदा सौख्यमभूत्सुजाग्रतः[७] ।
कृतन्तु सञ्चार[९]मितीह[१०] वाञ्छितं[११] सञ्चार[१२]तस्त्वं च लभस्व तत्[१३]ततः[१४] ॥
सञ्चार[१५]शब्दार्थममुं विभावय[१६] यत्नात्[१७] समुद्योग[१८]मलं स्वमानसे ।

---

१. तत्सम्बन्धिन्याः निद्रायाः तन्द्रायाश्चेति यावत् । २. त्यागः । ३. निद्रातन्द्रापरित्यागेन । ४. द्वापरे जनानां भद्रमासीत् । ५. अतः आलस्यपरित्याग एव द्वापरयुगमित्याकलय । तेन क्षेमं सम्पादयेत्यभिप्रायः । ६. आलस्यं विहाय उत्थानम् - कार्यकरणे अभिमुखीभावः त्रेतायुगम् । ७. उत्तिष्ठतः । ८. कृतयुगन्तु । ९. सम्यगाचरणम् - कर्तव्यमाश्रित्येति यावत् । १०. कृतयुगे । ११. समीहितम् - अभीष्टकार्यमिति यावत् । १२. उद्योगात् । १३. वाञ्छितम् । १४. सञ्चारतः । १५. सञ्चारशब्दः "चर-गतिभक्षणयोः" इति भ्वादिधातोः 'अच्' प्रत्यये कृते 'चर' इति रूपसिद्धिः । अनन्तरं प्रज्ञादित्वात्स्वार्थे अण् । तेन चर एव चार इति रूपसिद्धिः । सम्पूर्वकचारः संचारः इति स्थिते - 'अभिधा'-वृत्या सम्यक् चारः गतिरिति वाच्यार्थः सम्पद्यते । तस्यैव 'लक्षणा'-वृत्तिद्वारा कार्येषु सम्यगाचरणमिति लक्ष्यार्थः उपपद्यते । तस्यैव पुनः तात्पर्यार्थेन वा व्यञ्जनावृत्तिद्वारा वा उद्योगः—उद्यमः इति व्यङ्ग्यार्थोऽप्याकृष्यत इति सुधीभिर्भाव्यम् । १६. विद्धि । १७. प्रयत्नपूर्वकम् । १८. समुद्योगं - सम्यक् निद्रातन्द्राद्यधोभाग-स्थितिं विहाय-अत ऊर्ध्वभागे स्थित्या योगः कर्तव्यविशेषेषु मनसः योजनं-कार्यकरणमिति यावत् ।

उद्योगशीला[1] जयिनस्सुखार्थिनो[2] वने कृतोद्योगपरो[3] भव प्रियात्[4]॥
वदन्तमेवं द्विजरूपधारिणं नत्वेन्द्रमामन्त्र्य[5] वने चचार हा।
स पञ्चमाब्दे वनमध्यसंस्थितो विचिन्तयामास[6] जगत्[7]स्थितिं
निजाम्[8] ॥४५॥

किमस्ति नित्यं[9] जगति[10] त्रिकालतो[11] विचार्यमाणे[12] परिणामसंस्थितिः[13]।
विकारिण[14]स्सा[15]ऽस्त्यविकारि[16] यद्भवेत्तदेकमेवेति[17] सदस्ति[18] वस्तुतः[19]

---

१. उद्यमवन्तः। २. सुखमेव अर्थः—प्रार्थनीयफलं तत् येषामस्तीति सुखार्थिनः। ३. वने कृतोद्योगस्तु प्रकृतिसौन्दर्यदर्शनं देवतापूजा-तपसा तत्वदर्शनमित्यादयः। ४. मनस्समाधानेन। ५. सञ्चारणायानुज्ञां प्राप्य। ६. विशेषेण विचारं कृतवान्। ७. व्यापारम्। ८. तत्वतः निष्कृष्टाम्। ९. अप्रच्युतानुत्पन्नस्थिरैकरूपं नित्यमिति शास्त्रविदां मतम्। १०. विवर्तेन दृश्यमानप्रपञ्चे। ११. भूतभवद्भविष्यभेदेन त्रिधा कलितकालात्। १२. तत्वमीमांसायाम्। १३. नामरूपयोरन्यथाभावः। यथाबीजमेवाङ्कुरादिनामभिः अङ्कुराद्याकारैः परिणमते। १४. यद्यत् विकारि तत्तदनित्यम्-परिणामित्वात् तादृशस्यैव। १५. परिणामस्थितिः। पूर्वं 'जगति' पदव्याख्याने जगतो विवर्तः प्रदर्शितः। अत्र जगतः परिणामः निरूपित इति यद्यपि विरोधः प्रतिभासते तथापि यदा जगतः परिणामवादस्सिद्धः-तदा तेनैव विवर्तवादसाधनमतिसुलभमित्याकूतेन विरोधाभासः परिह्रियते। १६. अपरिणामि। १७. त्रिविधपरिच्छेदरहितं यत् तादृग्वस्तु-अद्वितीयं परब्रह्मेति यावत्। १८. तच्च सदेव-"सदेव सोम्येदमग्र आसी" दित्यादिश्रुत्या। १९. वस्तुतत्वेन-वस्तु-'वस' धातोः 'तुन्' प्रत्ययेन निष्पन्नं रूपम्। एवं च वसतीति वस्तु "ईशावास्यमिदँ सर्वम्" इत्यादि श्रुतिसिद्धम्।

दुःखं सुखं वा न[1]हि यस्य वस्तुन[2]स्तदेव[3]साक्षात्करणीयवस्तु[4] नः[5] ।
सरूप[6]नीरूपगुणागुणप्रधीर्ध्यानाय भाव्या[7] नतु वस्तुगोचरा[8] ॥

यदस्ति वाचां[9] मनसो[10]ऽप्यगोचरं[11] निरूपणं[12] तस्य तदीदृशं[13] कथम् ।
श्रुति[14]र्हि मातास्ति[15] पिता[16] च धीमतां तद्वाचि[17] निष्ठा ह्यमृतं[18] भजन्ति ते

एवं सुतत्त्वे[19] प्रतितिष्ठतो[20]ऽप्यहो मनो गृहायाऽस्य[21] चकर्ष धीबलम्[22] ।

---

१. सुखदुःखादयः आत्मगुणाः इति तार्किकाः । तद्यथा वा भवतु । निर्गुणस्य गुणसमवेतत्वमनुपपन्नम् । २. ब्रह्मण इति यावत् । ३. आत्मस्वरूपमेव । ४. अनुभवितव्यवस्तु । ५. विविदिषूणामिति । ६. रूपगुणादिभिर्भावनाप्यावश्यकी । कुतः ? ध्यानाय-सगुणोपासनापूर्वकं हि निर्गुणोपासनम् । तच्च यावत् ज्ञाता ज्ञानं ज्ञेयं चेति त्रिपुटस्थितिर्वर्तते । ७. चिन्तयितव्या । ८. त्रिपुटैकीकरणस्थितौ तु वस्तु चिन्मात्रमेव न किञ्चिदन्यदवशिष्यते इति वेदान्ततत्वमत्र संग्रहेण निरूपितम् । ९. वचसाम् । १०. चित्तस्य । ११. अविषयः । १२. यथास्थितिवर्णनम् । १३. तद्वस्तु एवं भवतीति निर्णेतुं कथं शक्यम्-अशक्यमित्यर्थः । १४. तादृङ्निर्णयाभावे तत्वयथार्थावगमाः कथं भवेयुरिति चेत्-श्रुतिरेव वेदान्तवाक्यान्येव प्रत्ययजनकानीत्युच्यते । १५. अतः श्रुतिरेव मातृस्थानीया ब्रह्मज्ञानजनकत्वात् । १६. सैव पितृस्थानीया अज्ञाननिवृत्तिद्वारा शोकमोहादिभ्यः समाधिस्थं पारयितुं शक्तत्वात् । १७. श्रुतिवाक्येषु । १८. मोक्षम् । १९. तत्वेषु यत् श्रेष्ठं तत् सुतत्वम् । २०. स्थितस्य तत्वज्ञानिनः इत्यभिप्रायः । २१. रोहितस्य । २२. धीशक्तिम्-तत्वानुचिन्तनधारणसामर्थ्यम् ।

तथागतेऽस्मिन् कियदन्तरे[1] स्थितो विप्रस्स इन्द्रः पुनराह रोहितम्॥
सुस्वादुपानं[2] मधुरान्नभोजनं[3] भोगाश्च[4] सर्वे चरतो[5] भवन्ति भोः।
श्रैष्ठ्यं[6] हि सूर्यस्य परं[7] निगद्यते चरन् सदाऽतन्द्र[8]मिदं[9] स[10] लब्धवान्[11]॥
प्रत्यक्ष[12]मेवेद[13]मसौ[14] विभावयन्[15]नब्देऽपि षष्ठे वनवासमाश्रितः।
बुद्धिस्स्थराऽऽस्तेऽस्य मनस्तु चञ्चलं मनो यथा[16]ऽस्तेऽस्य तथा[17] चरत्ययम् ॥५१॥

क्षेत्राणि दृष्टानि कृतं[18] तपो मया स्तुता[19] जपेन त्रिदशाश्च पूजिताः[20]।
तत्वेन[21] दृष्टं जगदस्थिरं[22] मृषा[23] तथा[24]पि गत्यन्तर[25]मत्र नास्त्यहो[26]॥

---

१. कियद्दूरे। २. अमृतोपमानम्। ३. मृष्टान्नभोजनम्। ४. गन्धमाल्यादीतरभोगाः। ५. सञ्चरतःउद्योगिन इति यावत्। ६. अधिक्यम्। ७. उत्कृष्टम्। ८. जागरूकतया। ९. उत्कृष्टस्थितिम्। १०. सूर्यः। ११. अधिगतः। कथम्? सदा चरन्नेवेति हेतूक्तिः। १२. सूर्यस्य सञ्चारः प्रत्यक्षदृष्टः खलु। १३. सूर्यस्य श्रैष्ठ्याधिगमः। वाक्यजातार्थे नपुंसकम् - प्रत्यक्षदर्शनयोग्यत्वादिदमा निर्देशः। १४. रोहितः। १५. चिन्तयन्। १६. यस्मिन् यस्मिन् विषये मनः प्रवर्तते। १७. तत्तद्विषयककार्यमयमाचरति। एतेनायं मनोऽधीन एवेति प्रदर्शितम्। १८. आचरितम्। १९. जपेन त्रिदशाः स्तुताः-मनसा सुचिन्तिता इत्यर्थः। २०. त एव षोडशोपचारादिभिराराधिताः। २१ तत्वविचारेण। २२. अशाश्वतम्। २३. अत एव मृषा मिथ्या-नतु शून्यम्। ब्रह्मविवर्तें हि सर्वं तदन्यदिव प्रतिभाति। यद्विवर्तितं तन्मृषा भवतु - विवर्तस्याश्रयः- अधिकरणन्तु ब्रह्मैव - तत्सत्यं वस्त्विति तात्पर्यार्थः। २४. एवं ज्ञातवतोऽपि। २५. अन्या गतिः-गृहाधिवासापेक्षां विना। २६. ज्ञानवानपि मोहपरवशो

एवं चिन्ता मनसि कलिता रोहिते शान्ति[१]रासीत्सोऽजीगर्तं[२]
यद[३]गमदहो[४] सूयवासस्य पुत्रम् । शोक[५]स्साधोर्भवति विजित[६]-
स्साधुयोगा[७]त्प्रशान्तिर्योगादिन्दो[८]र्हृत[९]मकुशलं[१०] कैरवस्येव[११] लोके ॥

इति श्री वेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके "हरिश्चन्द्रकाव्ये" पुत्रवियोगो नाम तृतीयस्सर्गस्समाप्तः ।

---

भवतीति विषादाश्चर्यद्योतनाय 'अहो' इति प्रयोगः ।

१. मनस्समाधानम् । २. तन्नामानं ब्राह्मणम् । ३. यदा । ४. तद्दर्शनादेव समस्तचिन्ता प्रणष्टा - शान्तिरायातेत्याश्चर्यम् । ५. मोहाद्यखिलदुःखानामुपलक्षणम् । ६. नाशितः । ७. समागमेन । ८. चन्द्रकिरणस्पर्शमात्रादेव । ९. अपहृतं कैरवं विकसितमभूदिति तात्पर्यम् । १०. मुकुलीभावरूपमशुभम् । ११. कुमुदस्येव अत्र विशेषार्थेन सामान्यार्थसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः । स च उपमयोज्जीवित इति विकस्वराऽलङ्कारः बोध्यः ।

अन्तिमपद्यं मन्दाक्रान्तावृत्तनिबद्धम् । तल्लक्षणम्-"मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तो गुरू चेत्" इति । अस्मिन् सर्गे-देवापराधः– तत्फलं धीरभावः- दैवसहायः- प्रकृतिसौन्दर्यं - तद्दर्शनेन सन्तोषः- साधुदर्शनेन मनश्शान्तिरित्यादयस्सूचिताः ॥

इति श्रीवेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके "हरिश्चन्द्रकाव्ये" पुत्रवियोगो नाम तृतीयसर्गस्य गम्भीरपदार्थबोधिन्याख्या व्याख्या समाप्ता ॥

---

# अथ चतुर्थस्सर्गः ।

---

अजीगर्तं[1] नत्वा[2] ध्रुवगति[3]रियं रोहितसुधीः
स्ववृत्तान्तं सर्वं द्विज[4]मकथयच्छान्तमनसा[5] ।
स[6] आशीर्भिस्तुष्टं[7] नृपतिमकरोद्वाञ्छितफलम्[8]
सुयोग[9]स्साधूनां कलयति हितं साधुभिरलम् ॥१॥
तदा घण्टानादोऽजनि विबुध[10]पूजार्थमतुलः[11]
पयःपूर्णः कुम्भो द्विजसविधमानीत उदये[12] ।
सिताम्भोजादीनि[13] प्रथितकुसुमान्याहरदसौ[14][15]
फलं भव्यं[16] नृणां शुभशकुन[17]मेवं कथयति[18] ॥२॥

---

अस्मिन् सर्गे अन्तिमपद्यं विना तदितरपद्यानि 'शिखरिणी-वृत्तनिबद्धानि । तल्लक्षणम्-"रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति । १. तन्नामानं ब्राह्मणम् । २. प्रणम्य । ३. अस्य भाविनी। गतिः ध्रुवेत्यभिप्रायः । ४. ब्राह्मणाय । ५. शोकेनानभिभूतमनास्सन् ६. अजीगर्तः । ७. सन्तोषभरितम् । ८. वाञ्छितानि अभीप्सितानि फलानि यस्य तम् । ९. सत्सङ्ग इति यावत् । १०. देवतार्चनाय । अनुपमः- अत्यानन्दकर इति भावः । १२. सूर्योदयकाले । १३. आदिशब्देन चम्पकजातीमल्लिकादीनि गृह्यन्ते । १४. आनयत् । १५. रोहितः । १६. भावि। १७. शुभसूचकानि शकुनानि-जात्यर्थे समुदायार्थे वा एकवचनम्। १८. "वा पादान्तं विकल्पेनेति" विधानादत्र लघोर्गुरुत्वं सिध्यति ।

किमास्ते वाञ्छा ते मम सविधमेव[1]ागतवतो
वद त्वं निर्भीतो[2] नृपतनय तां सुविशदम्[3] ।
कृतां[4] तां सिद्धां त्वं कलय[5] मम तोषं[6] कुरु तथा[7]
[8]हितं यो ह्यऽन्येषां[9] न समवति[10] जन्माऽस्य विफलम्[11] ॥३॥
अजीगर्तेनैवं सदय[12]मनुयुक्तो[13]ऽवददसौ
ममेदानीं याच्ञा द्विजसुत[14]कृते यज्ञवशतः[15] ।
यजिष्ये तेनाहं पितृशपथ[16]मुक्तोऽत्र कुशलम्
स पुत्रः पुण्यात्मा[17] निजपितृ[18]हितं साधयति यः ॥४॥

---

१. अन्यान् पुण्यपुरुषान् विहाय मामेवोद्दिश्य । २. सत्यकथने भीतिः कुतः इत्याशयः । ३. सविस्तरम् । ज्ञाते हि दुःखकारणे तत्परिहारोपायचिन्तनम् । ४. तव वाञ्छां सिद्धवत्कृतां । ५. भावय । ६. सन्तोषम् । ७. यदा तवाभीष्टमिदमिति जानामि तदाहं येन केन प्रकारेण वा तन्निर्वर्तयिष्ये । तेनैव मम तोषो जायते इति तात्पर्यम् । ८. उपकारान् । ९. परेषां "परोपकारः पुण्याये"ति नीतिः । १०. न सम्यक्पालयति । स्वार्थत्यागेनापि परहितं साधयितव्यमिति तात्पर्यम् । "एते सत्पुरुषाः परार्थघटकास्स्वार्थान् परित्यज्य ये" इति नीतिकारः । ११. निष्फलम्-व्यर्थमिति यावत् । १२. सकरुणम् । १३. पृष्टः—'प्रश्नोऽनुयोगः पृच्छा च'इति कोशः । १४. द्विजसुताधिगमाय । १५. वरुणमुद्दिश्य यज्ञं कर्तुम् । १६. 'यदि मे सुतो भवति तेनैव त्वां यजे' इति पित्रा वरुणाय प्रतिज्ञा कृता । स एव शपथः, तस्मान्मुक्तिस्तु स्वस्य प्रातिनिधित्वेन यं कंचिदन्यमधिगम्य तेन यज्ञनिर्वर्तनेनैव भवतीत्याभिप्रायः । १७. पुण्यः शुद्धः-आत्मा मनः यस्य सः । १८. पितृश्रेयस्साधकमिति यावत् ।

इदं[1] श्रुत्वोवाच स्थिरसुधियमेतं[2] द्विजवरः[3]

किय‌द्द्रव्यं त्वं भो वितरसि[4] कुमारे स्वधिगते[5] ।

धनेनैव क्रेयो[6] विधिहतजनि[7]र्निर्धनसुतो[8]

धनं सर्वार्थाप्यं[9] कलयति जनो मोहवशतः[10] ॥५॥

शुनःपुच्छो नाम प्रथमतनयो मेऽस्ति सुगुणः[11]

शुनश्शेपो धीरस्त[12]दनुजवरो[13] मध्यमसुतः ।

शुनोलाङ्गूलोऽसौ वरसुतकनिष्ठो[14] भवति मे

त्रयः पुत्रास्त्रेता[15]सदृशरुचयः श्लाघ्यकृतयः[16] ॥६॥

---

१. रोहितस्य वचनम् । २. स्थिरा-समीचीना सुधीः-सुमतिः यस्य तं-स्थिरप्रतिज्ञमितिभावः । ३. द्विजश्रेष्ठः प्रकरणवशात् अजीगर्त-एव । ४. ददासि । ५. सुलभेन प्राप्ते सति । ६. क्रेतुं योग्यः । ७. विधिना-दैवेन हता व्यर्थीकृता-जनिः जन्म यस्य सः । ८. निर्गतं धनं यस्मात् सः निर्धनः- दरिद्र इति यावत् । तस्य सुतः-दरिद्रस्य मम सुतः इति ध्वनिः । ९. सर्वे च ते अर्थाश्च-सर्वार्थाः-सर्वकार्याणीत्यर्थः । तेभ्यः (चतुर्थी) तदर्थं आप्तुं-प्राप्तुं-सम्पादयितुं योग्यं-आप्यं-सर्वार्थ-साधनं धनम्, इति तात्पर्यम् । १०. तत्वविचारे धनेन सुखं न भवति । अतः वित्तैषणात्यागः विहितः तथापि मोहवशादेव लोकः धनपरो भवतीत्याकूतम् । ११. अतः मेऽतीव प्रियः इति ध्वनिः । १२. आपत्स्वपि निर्भयः । १३. अनुजयोरुत्तमतरः । १४. वरसुतेषु कनिष्ठः । १५. दक्षिणाग्निगार्हपत्याहवनीयनामानो अग्नयः 'त्रेता' शब्देनोच्यन्ते । तत्समाना रुचयः- द्युतयः येषां ते वर्चस्विनः इत्यर्थः । १६. स्तुत्यकर्माणः ।

इदं वाक्यं श्रुत्वा हृदि मुदमयं रोहितयुवा
भजन् याचे पुत्रं त्रिषु वितर तेष्वेकमयि मे ।
गवां ते देयं स्या[1]च्छतमनु[2]पमं तत्प्रति[3]कृतं
धनार्थी[4] पुत्रार्थी[5] त्वमहमिति मोदात् कथितवान् ॥७॥
दरिद्रोऽजीगर्तो धनकलित[6]चित्तः प्रमुदित[7]-
स्तथास्त्वित्याहामुं स च परमसन्[8]तोषमगमत् ।
अहो जन्तो[9]र्वृत्ति[10]र्भवति सुखदा स्वेष्टफलतः[11]
परं धर्माधर्मप्रगति[12]कलने भूरि[13] विमुखा[14] ॥८॥
शुनःपुच्छः पुत्रो मम हितकरः[15] प्रेमभरितः[16]

---

१. गवां शतं ते दास्यामीति तात्पर्यम् । २. शतं अनुपमं श्रेष्ठ-मित्युक्तेः अर्थवत्ता नास्ति, तथापि "अनुपम" पदविशेषणं गवाम् इत्यत्र अन्वेतव्यमित्यभिप्रायः। अथवा 'गवां शतम्, अनुपममित्यन्वयः । शत-संख्याका गावः-अनुपमाः श्रेष्ठा इत्यभिप्रायः । ३. पुत्रं क्रीत्वा-तत्क्रे-यद्रव्यं प्रति गवां शतं दीयते इति भावः। ४. धनार्थी-त्वम् । ५. पुत्रार्थी-अहमिति क्रमोऽत्र विवक्षितः । ६ धनसम्पादने आविष्टं चित्तं यस्य सः। ७. दरिद्रस्य येन केन वा प्रकारेण धनप्राप्तौ सत्यां तोषः भवतीति भावः । ८. रोहितस्यापि आत्मरक्षणार्थं प्रतिनिधिलाभो जात इति सन्तोषः । ९. प्राणिनः । १०. मनोरथः । ११. स्वेष्टलाभतः । १२. अनेन कर्मणा धर्माभिवृद्धिर्वा अधर्माभिवृद्धिर्वा भवेदिति विचारे । १३. भूरि-अत्यन्तम् । १४. अनासक्ता । अविचारपूर्वकमेव सन्तोषा-दिभावाः जायन्ते इत्यभिप्रायः। १५. मम विधेयो भूत्वा मयोक्तं सर्वं करोति-इति भावेनोक्तम् । १६, मयि तस्य प्रीतिरधिका इति यावत् ।

कुलस्याधारो मे पितृजनविमोक्षाय भवति ।
न दास्याम्येनं तत्प्रथमसुतमित्याह स पिता
स्वभावाज्ज्येष्ठे स्यात्पितुरधिकरागस्सुतगणे ।९॥
तदा भार्याऽस्याऽऽह त्रिषु मम सुतेष्वेष कुशलः
शुनोलाङ्गूलाख्यो मम हृदयसञ्जाततनयः ।
न तं तद्दास्यामीत्यनुपदमहो निश्चितमतिः
प्रकृत्या मातुस्स्यादधिकहितधीरन्तिमसुते ॥१०॥
न मध्यस्थेऽध्यस्तं पितृहृदयमासीत्स्वतनये
शुनश्शेफे तस्मादियमजनि गाथा जगति हा ।
अहो भेदः पित्रोस्स्वतनयगणे स्नेहविषये ।

---

१. सन्ततिसातत्याय प्रधानः । २. अत एव अनेन कृतेन कर्मणा पितृजनानां - पितृपितामहादीनां - स्वर्गप्राप्तिर्भवतीत्याकूतम् । ३. प्रायः ४. वात्सल्यमित्यर्थः । ५. स कुशलो वा अकुशलो वा भवतु कनिष्ठपुत्रे कुशलत्वमत्र मात्रारोपितम्-वात्सल्याधिक्यात् । ६. तस्य जनने मम अतिप्रीतिरासीदिति तात्पर्यम्, "दम्पत्योर्हृदयग्रन्थिरपत्यमिति कथ्यते" इति भवभूतिः "उत्तररामचरितनाटके" । ७. प्रतिवचनानन्तरमेव । ८, निश्चितसङ्कल्पा सती । ९. अस्याः अस्मिन् अधिकहितं भवतीति बुद्धिः । १०, कनिष्ठे । ११. मध्यमपुत्रे । १२. प्रापितम् । १३. मातापित्रोः पुत्रवात्सल्यम् । १४. "मध्यमपुत्रः शुनश्शेपः" इति यत्र कुत्र वा अभिहिते कश्चित् मातापितृभ्यां वा उभयपक्षाभ्यां वा परित्यक्तः अतः हतो भवतीति लोकोक्तिः । १५. हेति खेदे । १६. पक्षपातः । १७, स्वतनयेष्वित्यभिप्रायः ।

प्रकृत्या लोके हा स्वतनयविभागः[1] कथमभूत् ॥११॥

यथा वा स्यात्तत्वं प्रकृते[2]विषये मध्यमसुतः

शुनश्शेपस्त्यक्त[3]श्शतमितधनेनाऽऽपदि[4] गवाम् ।

तथा लोके धर्मो धननियतशक्ति[5]र्जयति हा[6]

कृतार्थः[7] पापी[8] स्याद्धनजमाहिम्ना[9] जीवति सुखम् ॥१२॥

गिरिं प्रातर्यातो रविमयमुपस्थाय[10] तम[11]थो[12]

स दृष्ट्वाऽस्तंयन्तं[13] प्रतिफलितम[14]ब्धौ[15] रविमवैत्[16] ।

उपस्थानं कर्तुं नभसि तमपश्यन्[17] प्रतिनिधिम्[18]

---

१. ज्येष्ठः पितृभागस्थः, कनिष्ठः मातृभागस्थः, इति ज्येष्ठे पितुः कनिष्ठे मातुः पक्षपातेन विभागः । २. प्रकृतकथासन्दर्भे । ३. मातापितृभ्यां विसृष्टः । ४. अजीगर्तस्य दरिद्रावस्थायां रोहितस्य प्राणहानिदशायां वा । ५. धने गोकनकादिद्रव्ये बद्धा-शक्तिः बलं यस्य सः धर्मोऽपि धनायत्त इति भावः । ६. हेति जुगुप्साजनितखेदार्थे । ७. कृतःलब्धः अर्थः प्रयोजनं येन सः । ८, पापकार्येषु प्रवृत्तः जनः अत्र पापिजनमुद्दिश्य धनमहिम्ना कृतार्थत्वं विधीयते । ९. अस्य श्रैष्ठ्यं धनादेव जातं नतु गुणशीलादिभिः । १०. सन्ध्याकार्यावसरे अभिवन्दनपूर्वकं स्तुत्वा । ११. सूर्यम् । १२. पुनस्सायंसन्ध्यावसरे-द्वितीयपादे 'अस्तंयन्त' मिति लिङ्गेन अथो इत्यस्य सायमित्यर्थो लभ्यते । १३. अस्तकालगतम् । १४. जले मूर्च्छितम्-तच्छायामिति तात्पर्यम् । १५. समुद्रे-पश्चिमोदधाविति तात्पर्यम् । १६. ज्ञातवान्-'इण्' गताविति धातोः लङि प्रथमपुरुषैकवचनरूपम् । १७. अदृष्ट्वेति यावत् । १८. तत्स्थानीयम् ।

हृदिस्थं[1] भेजे तं[2] नहि किमिदमाश्चर्यघटितम्[3][4] ॥१३॥
तमादाया[5]ऽऽयाद्धा[6] द्विजवरसुतं शुल्कवशिनम्[7]
तदारण्याद्गेहं सपदि पितृसन्दर्शनपरः[8] ।
प्रमोदं कार्याप्तं[9] निजहृदि वहन् रोहितनृपः
कृते कार्ये[10] सिद्धे भवति सुहृदां[11] प्रीतिरतुला । १४॥
स वेगादासाद्य स्वगृहमभिवन्द्याऽथ पितरौ[12]
समोदं हृष्टस्सन्नकथयदशेषं कृतविधिम्[13] ।
पिता माता बन्धुस्सकलपरिवारो मुदमगा-
न्नकस्यानन्दः स्याद्विजयकृतवार्ताश्रवणतः[14] ॥१५॥

---

१. हृदि इति दहराकाशस्य निर्देशः-तत्रस्थम् । २. ज्ञानसूर्यम्-परमात्मानमिति भावः-"योऽयं विज्ञानमयः- हृद्यन्त-ज्योतिः" इति श्रुत्या । ३. इदं-परमात्मध्यानरूपमुपस्थानम् । ४. अपूर्वघटितमित्येको भावः- विदुषां सर्वं ब्रह्मेति बुध्या यथासम्प्रदायप्राप्तं सूर्योपस्थानमपि परमात्मध्यानमेवेति न किमप्यत्राश्चर्यम । परन्तु सहजमेवेत्यन्यो भावः । अत्र नञर्थः किमर्थस्य प्रयोजको भवति । अत्र 'अतिशयोक्त्याद्याः' अलङ्काराः बुद्धिमद्भिरूह्या भवन्ति । ५. शुनश्शेपम् । ६. हेति श्रृण्वतां पठतां च मनसि जातस्य व्यसनस्य सूचको निपातः । ७. द्रव्येण क्रीतमित्यर्थः । ८. पितृदर्शने परमोत्सुक इति यावत् । ९. आरब्धकार्यसिध्याविर्भूतम् । १०. अर्थान्तरन्यासालङ्कारः । ११. समीचीनं-हृत् येषां तेषाम् । १२. मातापितराविति तात्पर्यम् । १३. निर्वृत्तकार्यप्रकारान् । १४. कार्यसिद्धिसम्बन्धवृत्तान्तस्य श्रवणात् ।

प्रतिज्ञातो[1] यागो वरुणमधिकृत्या[2]ऽस[3(a)] हि मया
मयानीतो विप्रः[3] प्रतिनिधिरयं[4] मे भवति भोः ।
यजस्व त्वं तेन स्थिरमतिरिहाद्यैव[5] वरुणम्
स देवस्त्वां शोकात्तदनु[6] हि विमुञ्चेत्सकरुणः ॥१६॥
क्षमस्व त्वं मां भोः पितरहमयोग्यस्त्वसुत-
स्त्वदुक्तं पूर्वं यन्नकृतमिति हेतोर्विधिवशात्[9] ।
कृतो धिक्कारो[10] मे त्वयि परिणतो[11]ऽयोऽद्य[12] सुखदो
भविष्यं ज्ञातुं कः प्रभवति[13] मतिस्तादृशगतिः[14] ॥१७॥
निशम्येमं बोधं[15] सुतशिरसि चाघ्राय[16] स पिता

१. सङ्कल्पितः-त्वयेति शेषः । २. वरुणमुद्दिश्य । ३. (a) अत्र असधातुःभ्वादिगणीयः लिटि प्रयुक्तः । ३. विप्रवर्णोद्भवः बालः । ४. मम स्थाने पशुत्वेन स्थापयितुं योग्यः । ५. प्रतिनिधिरूपपशुस्थानीयजनलाभेन त्यक्तचिन्तः- निश्चिन्तमनस्कः- शान्तहृदय इति यावत् । ६, अनन्तरम् यजनानन्तरमेव । ७. असम्मतः । ८. न निष्पादितम् । ९. नियतेर्बलात् । १०. तिरस्कारः । ११. अन्यथाकृतमन्यथाफलितमित्यर्थः । १२. अयः- शुभावहो विधिः-अनुकूलफलदः । १३. न कोऽपि समर्थ इति यावत् । १४. "बुद्धिरुत्पद्यते तादृग्यादृशी भवितव्यता" इति नियमात् भवितव्यतामार्गमनुसृत्यैव जनानां मतिः (बुद्धिः) कार्येषु (लोकव्यवहारेषु) प्रसरतीति दैवपुरुषकारवादे दैवमेव प्रबलमिति घटयतीयं लोकोक्तिः । १५. पुत्रेणोक्तम्- अत्र बोधशब्दार्थः नह्युपदेशपरः, सुतः पितरं कथं वा उपदिशेत्- सः उपदेष्टुम् समर्थोऽपि नोपदिशेत्-सम्प्रदायविरोधापत्या । अतोऽत्र केवलकर्तव्यांशस्य निर्देशः । १६. पित्रादिभिः पुत्रादीनां आगमे शिरसि आघ्राणं कर्तव्यमिति शास्त्रं सम्प्रदायश्च ।

मनो यज्ञे[1] चक्रे तनयतनुरक्षाप्रमुदितः[2] ।
अहो चित्रो[3] भावस्स्वपरजनबुद्ध्या[4] प्रकलितो[5]
यथा प्रीतिस्स्वीये[6] किमिव परकीयेऽपि[7] न तथा ॥१८॥
ततोऽयाद्[8]देवं तं झटिति वरुणं जातकरुणम्[9]
नृपोऽसौ याचे भोः प्रतिनिधिकृतो[10] विप्रतनयः ।
यजेऽहं त्वां तेन त्वमिदमनुमन्यस्व[11] कृपया
सुतं मे रक्षाऽत्र स्वयमनुगृहाणाद्य[12] बत[13] माम् ॥१९॥
नृपोक्तं श्रुत्वेदं सुलभमनुमेने[14] स वरुणो
वरं क्षत्रात्[15]पुत्रादिह परिचितो[16] विप्रतनयः[17] ।

---

१. यज्ञं कर्तुं मनसि निश्चितवानित्यर्थः । २. पुत्रस्य प्राणरक्षणमासीदिति प्रमोदोऽस्य जातः । ३. यो न स्वाभाविकः सः चित्रः- अन्यादृशः । ४. अयं मदीयः तस्माद्रक्षितव्यः । असौ अन्यदीयः अतः उपेक्षितव्यः इति ज्ञानेन । ५. कृतः-आचरित इति यावत् । ६. स्वकीये जने पुत्रादौ । ७. अन्यस्मिन् जने अनाथादौ । ८. अगच्छत् । ९. जाता करुणा यस्मिन् तं-करुणार्द्रचित्तमिति यावत् । १०. मम पुत्रस्थाने नियोजितः । ११. अङ्गीकुरु । १२. स्वयं-त्वमेव, अथवा स्वयं मां, मामपीति अवधारणासमुच्चयार्थे अव्ययः । १३. 'बते'ति-महोदरेण बहुक्लेशसहिष्णुरहं भवामि, अतः मयि अनुतापपूर्वकमनुग्रहःकार्यः इति तात्पर्यम् । १४. अनुकूलम् । १५. क्षत्रियादित्यर्थः । १६. इदानीमावेदितः । १७. ब्राह्मणशिशुः- क्षत्रियाद्विप्रः श्रेष्ठ इति भावः ।

स भेदो वर्णानां[1] गुणकृततपोजन्मविहितो[4]
न भेदो जीवानां परगतिहिते मोक्षविषये ॥२०॥
त्वया कर्तव्यो भो नृपवर स यागोऽत्र विहितो[6]
य एको राज्ञां स्याद्विविधकलुषघ्नश्शुभकरः।
तदेकाहे यागे त्वमयि कुरु सोमाख्यपरमे
पशुं विप्रं बालं तदनु शपथान्मोचयसि ते ॥२१॥
जगादैवं देवो नृपमथ स यागाय कृतधी–
ऋषीणामाह्वानं विनयविहितं साधुकलितम्।

---

१. सत्वरजस्तमोगुणैः अहिंसासत्यादिगुणैर्वा निश्चितः। २. तत्तत्प्राणिकृतकर्मविशेषैः तत्तदनुगुणवर्णेषु जन्म निश्चितमिति भावः। ३. जननम्। ४. विहितः- निर्धारितः भगवता इति यावत्। अयं परमार्थः आधुनिकेभ्यो जातिसाङ्कर्यपरेभ्यो न रोचते। तावता का हानिः। वस्तुस्थितिः एकरूपैव। ५. परलोकप्राप्तिकरे विचारे। ६. निर्दिष्टः। ७. सर्वपापहरः। ८. मङ्गलप्रदः-राजसूययाग इति भावः। राजभिः युद्धेषु शत्रुपक्षहननात् बहुविधानि पापानि समार्जितानि भवन्ति खलु। तेषां पापानामपनोदनार्थं कश्चिद्यागः विहितः। स एव 'राजसूय' इति कथ्यते। ९. एकस्मिन्नहनि कर्तव्ये। १०. सोमाभिषवे इत्यर्थः। ११. प्रतिज्ञायाः। १२. आत्मानमित्यध्याहारः विमुक्तो भवसीति तात्पर्यम्। १३. निश्चितसङ्कल्पः। १४. नम्रभावेन प्रार्थितम्। १५. ऋषीनाह्वयितुं ये योग्याः तान् प्रेषयित्वा तदागमनं साधयितव्यमिति विचार्य तथाकृतम्।

चकारार्थानिष्टान्[1] श्रुतिविहितकर्मोचितपटून्[2]
प्रजारक्षादीक्षोऽवहदथ[3] सुदीक्षां[4] क्रतुमुखे[5][6] ॥२२॥
स विश्वामित्रोऽस्मिन्नभवदह[7] होता[8] सुलभत-[9]
स्तथा यागेऽध्वर्युस्सपदि[10] जमदग्निर्मुनिवरः[11] ।
अयास्यो ह्युद्गाता[12] कृतपरिचयस्सामसमये[13]
वसिष्ठो ब्रह्माऽऽसीदिति[14] विधिकृता[15] यागसरणिः[16] ॥२३॥
पशुं यूपे बन्धुं नरमुपकृतं[17][18] शास्त्रविधिना[19]

---

१. शास्त्रेषु निर्दिष्टान् ऋत्विग्जनसंमतान् । २. यस्य कर्मणः ये ये पदार्थाः सुसंस्कृताः आवश्यकाः तान् सर्वान् । ३. प्राजापालने बद्धकङ्कणः । ४. स्वीकृतवान् । ५. सम्यग्यागविहितदीक्षाव्रतमिति-यावत् । ६. यागारम्भात्पूर्वम् । ७. अह, इति अहहार्थे प्रयोगः निश्चयार्थद्योतकः । ८. यागेषु यः ऋत्विक् स्तुतिभिर्देवानाह्वयति स होतेति कथ्यते । ९. सामान्यतः विश्वामित्रस्य वरणं न सुलभमिति गम्यते । १०. यागे तावत् आहूताभ्यो देवताभ्यो द्रव्यत्यागपूर्वकं यः होमं करोति सः अध्वर्युः । ११. ऋषिश्रेष्ठः । १२. यागे सोम-पानादिभिस्तृप्तानां देवतानां आह्लादार्थं सामभिः यः गायति स उद्गाता । १३. सामगानविधौ । १४. सर्वं यागकर्म यस्याज्ञया निर्वर्त्यते स ब्रह्मा । १५. दैवात्सम्पादिता । १६. यज्ञपद्धतिः-यागरचनापरिष्कार इति यावत् । १७. पशुस्थानीयं मनुजम् । १८. उपाकरणेन संस्कृतम् । १९. उपाकरणविधानेन-तत्तु पशुं "बर्हिर्युक्तया प्लक्षशाखया मन्त्रपुरस्सरं समुपस्पृश्य स्वीकारः उपा-करणम्" इति सायणाचार्यैर्वेदभाष्ये दर्शितम् ।

वृतो[1]ऽध्वर्युर्मेने न खलु जमदग्निः प्रियमिदम्।
नियोक्तारं यूपे तदपरमदृष्ट्वाऽहितकरं[2]
परां चिन्तां प्राप्ताः क्रतुवृतजना[3] हा[4] विमनसः[5] ॥२४॥
विलम्बो मा भूद्वोः सुचिरम[6]चिरात्[7]स्यात्क्रतुविधि-
स्स्तुता देवाः क्रूरा[8]स्त्वयि यदि भवेयुः प्रकुपिताः[9]।
तदा ते हानिस्स्यादिह परंगतौ[10] हा[11] बहुविधा
नियोक्तारं क्षिप्रं कुरु नृपवरेत्याहुरखिलाः[12] ॥२५॥
यदा चिन्ताक्रान्तो नृपतिरभवन्मूढधिषणो[13]
न वा किंकर्तव्ये[14] व्यसननिहतोऽयं कृतमतिः[15]।
तदाऽजीगर्तोऽयादभिमुखममुं[16] प्रार्थयत हा[17]!

---

१. प्रार्थितः। २. पापकरम्। ३. यागे ऋत्विक्त्वेन वृताः। ४. हेति खेदः समारब्धयागः सम्पूर्णो नासीदिति विचारप्रभवः। ५. नतु सुमनसः- चिन्ताक्रान्तमनस्कत्वात्। ६. बहुकालेन। ७. शीघ्रम्। ८. निग्रहबुद्धयः-अननुग्राहकाः इति यावत्। ९. विशेषाग्रहयुक्ताः-मन्त्रैराहूतानां देवानां सम्यक् सम्पूर्णमाराधनं न कृतं चेत् तेषां स्वभावेन आग्रहो जायते खलु। १०. ऐहिकामुष्मिकसुखावाप्तौ। ११. हेति खेदेन तादृशहानिरसहनीयेत्यर्थोऽभिव्यज्यते। १२. सर्वे जनाः। १३. यस्य धिषणा-बुद्धिः मूढा तमसाविष्टा सः स्तब्धमतिरिति भावः। १४. इदानीं कर्तव्यं किमिति विचारे। १५. कृता सन्नद्धा मतिः यस्य सः- स न भवतीति नञा अप्रयत्नवानित्यर्थो लभ्यते। १६. राज्ञः पुरतः। १७. पितापि यूपे स्वसुतनियोजनायाऽऽगत इति वीक्षकाणां मनस्युदितस्य अनुतापस्य सूचको निपातः।

नियोक्ष्येऽहं[1] यूपे सुतमपि गवामन्यशततः[2] ॥२६॥
तदर्थं[3] दास्ये[4] ते सपदि[5] कुरु भोस्ते कृतिममूं[6]
क्रतुं पूर्णं कृत्वा त्वमिह मम सम्पादय[7] यशः ।
वदत्येवं राज्ञि द्विजहतक[8] आसीत्सुतरिपु[9]-
र्न धर्मभ्रष्टस्य[10] स्वजनहनने[11]ऽप्यस्ति करुणा ॥२७॥
बबन्धामुं यूपे बत[12] शिरसि कट्यां पदयुगे
त्रिधा[13] बध्वा पुत्रं निरयगतिको[14] निर्घृणतया[15] ।
धनात्तृप्तः[16] शप्तो[17] निखिलसुजनैरास गतभी[18]-

---

१. निपूर्वक 'युजि'धातोः लृडात्मनेपदे प्रथमपुरुषैकवचनम् । २. पञ्चम्यास्तसिल्-शतगोधनादित्यर्थः । ३. स चासौ अर्थश्च तदर्थः तं-यावत्प्रार्थितं तावद्धनमिति भावः । ४. 'दा'धातोः लृडात्मनेपदि रूपम् । ५. झटिति । ६. क्रूरकर्मत्वात्-स्पष्टं वक्तुम् असहमानतया अमूमिति सर्वनाम्ना निर्देशः । ७. मां यशस्विनं कुरु । ८. ब्राह्मण-ब्रुवः-ब्राह्मणाधम इति निन्द्यवचनम् । ९. पुत्रस्य शत्रुः । १०. धर्म-च्युतस्य । ११. पुत्रादीनां हनने । १२. बतेति निपातः सर्वसन्ताप-सूचकः । १३. शिरसि, कटिप्रदेशे, पादयोः प्रत्येकम् एकया रशनया त्रिधा बध्वा रशनान्त्यभागेन यूपे बन्धनमिति विवेकः । १४. निरयः-नरक एव गतिः प्राप्यस्थानं यस्य सः-अत्र निन्दार्थे कप्रत्ययः । १५. निर्गता घृणा-करुणा यस्मात्तस्य भावः तया-कठिणहृदयेनेति भावः । १६. धनलाभेन स्वयं तुष्टः-सन्तुष्टः । १७. अयं नीचकार्यं कृतवानित्यन्यैश्शप्तः । १८. गता भीः यस्मात्-निर्भय इत्यर्थः ।

भयं वा[1] लज्जां वा न जनयति पापे निजकृतिः ॥२८॥
न यूपे बद्धस्यापि च विशसितारं[2] विदुरहो[3]
शुनश्शेपं हन्तुं बत[4] न पुनरेकोऽप्यभिमुखः[5] ।
अपूर्णे[6] यागे स्यात्स्व[7]विषय इहानर्थविषयो[8]
विपद्धां[9] प्राप्ता मे किमिति विललाप[10]ऽऽशु नृपतिः ॥२९॥
स एवा[11]जीगर्तः पुनरमुमवोचद्धनगृधिः[12]
गवां दद्याश्चेन्मे परशतमितं भो वरधनम्[13] ।
अहं सिद्धो राजन् विशसितुममुं कालवशगं[14]
पिता वित्ते गृध्नुः[15] क इह विशसेत्[16]स्वस्य तनयम् ॥३०॥
धनं दत्तं तस्मै सुतमुपससार[17] स्वयमसा–

---

१. विशेषेण सामान्यार्थसमर्थनरूपोऽर्थान्तरन्यासः। २. हन्तारम् । ३. सर्वेषां सन्तापसूचकोऽयं निपातः । ४. सर्वेषां सञ्जातस्य अनुतापस्य सूचकः । ५. नाङ्गीचकारेति तात्पर्यम् । ६. पूर्णेऽसति । ७. स्वस्य देशः । ८. सर्वविपद्भाजनम् । ९. हेति निपातः । मम देशे प्रजानां सर्वानर्थो भवतीति नृपस्य मनसि सञ्जातस्यात्यन्तखेदस्य सूचकः । १०. विपूर्वक 'लप' धातोः लिटि रूपम् । ११. जिह्वा सावधारणार्थः । १२. धने गृधिः-अत्याशा यस्य सः । १३. श्रेष्ठानां गवां शतमित्यभिप्रायः । १४. मृत्युगतमिति स्वापराधनिह्नवार्थमेवमुक्तम् । १५. अत्याकांक्षावान् । १६. हन्यात् । १७. समीपं गतवान् ।

वसिं कृत्वा हन्तुं शितमथ विशस्तेव सुजनम् ।
पिताऽपत्यं हन्ति स्वयमिह तु मार्जालककुले
गवाश्वादौ नैवं न शकुनिकुले नापि नृकुले ॥३१॥
शुनश्शेपो दृष्ट्वा व्यवसितममुं स्वस्य हनने
विचारं चक्रे हा किमिदमतिचित्रं परिणतम् ।

---

१. तीक्ष्णं-शाणोल्लेखनेन । २. चण्डाल इव । ३. निरपराधिनां। लोके अपराधिनं वा निरपराधिनं वा घातयितुं चण्डालानेव नियोजयन्ति । तेषां धनलुब्धानां चण्डालानां तादृशहिंसाकार्ये न किञ्चिदपि घृणाऽस्ति । तद्वदयं निर्घृणः चण्डाल इव स्वतनयवधरूपपापकार्ये प्रवृत्त इत्युपमार्थः । ४. बिडालजातौ-पुंमार्जारः सद्यो जातापत्येषु कानिचित् स्त्रीमार्जारासन्निधाने भक्षयतीति सर्वानुभवगोचरः । ५. चतुष्पदेषु पश्वादिषु । ६. द्विपदेषु पक्षिजातिषु । ७. मनुजेषु वा-सर्वप्राणिनामसाधारणमनुचितं महापापरूपकार्यम् अयं कृतवानिति निन्दाद्योतकव्याजोक्तिः । ८. प्रत्यक्षं पश्यन् । ९. उद्युक्तम् । १०. स्वपितरं पापकार्योद्युक्तमजीगर्तं पितेति मन्तुमप्यसहमानतया तिरस्कारबुध्या अमुमिति सर्वनाम्ना निर्देशः कृतः । ११. वधे । १२. मनसि-वक्ष्यमाणप्रकारेण विचारितवान् । १३. अत्यन्तनीचकृत्यमिति इदमा निर्देशः । १४. लोकव्यापारविरुद्धमिति यावत् । १५. प्राप्तं-मां हन्तुं दयया न कोऽप्यनुमेने तथापि मम पितैव मां हन्तुमुद्युक्त इति दैवादापादितोऽयं दुष्परिणाम इति सन्तापोक्तिः ।

पशुत्वे[1] संस्कारैः[2] कृतपुरुषम्[3] उत्स्रष्टुमपि[4] या

श्रुतिः[5] पुंसो हिंसां न कथमपि[6] कर्तुं हि मनुते[7] ॥३२॥

अजो[8] वा छागो वा विशसनपशुः[9] स्यादिह यथा

नरोऽप्येवं[10] न स्यादिति विधिषु[11] जानन्ति सुदृशः[12] ।

अहं त्वेवं हा हा[13] श्रुतिमतम्[14] उदास्यैव[15] विहितः[16]

---

१. पशुस्थाने । २. अत्र यज्ञपशुसंस्काराः चत्वारः-उपाकरणम्-नियोजनम्-आप्रीणनम्- पर्यग्निकरणमिति । उपाकरणमुक्तम् । यूपे बन्धनं नियोजनम् । प्रयाजयाज्यादिभिः एकादशऋग्भिर्यजनम्-आप्रीणनम् । दर्भैः कृतेनोल्मुखेन त्रिः प्रदक्षिणीकरणं-पर्यग्निकरणम् । ३. एतैस्संस्कृतमपि पुरुषम् । ४. प्राणैर्विमोक्तुं-रक्षितुमित्याशयः । ५. "अन्यत्र पर्यग्निकृतं पुरुषमारण्यांश्चोत्सृजन्ते हिंसायाः" इति या श्रुतिरस्ति सा । ६. न कथमपीति नञर्थावधारणम् । ७. अनुज्ञां करोतीत्यर्थः । ८. दक्षयज्ञभङ्गसमये ब्रह्मा मेषरूपमाश्रित्य पलायितवान्, अतः मेषस्य ब्रह्मणो नाम्ना अज इति औपचारिकप्रयोग इति मन्यन्ते केचित् । वस्तुतः मेषस्यैव अज इति छाग इति च व्यवहारः । तथापि आकारवर्णादिकमधिकृत्य तयोः कश्चिद्भेदोऽस्तीत्यत्र भेदव्यपदेशः । ९. आलम्भनपशुः । १०. पुरुषोऽपि । ११. शास्त्रेषु । १२. विद्वांसः । १३. स्वविषये शास्त्रविरुद्धं लोकविरुद्धं च यत् तदेवाऽऽचरितमिति स्वस्य दुर्भगत्वं विचार्य स्वस्मिन् सञ्जातसन्तापप्रकटनं सूचयतीदं निपातद्वयम् । १४. श्रुत्यभिप्रायम् । १५. निराकृत्य । १६. पशुत्वेन स्थापितः—यजमानेनेत्यभिप्रायः ।

प्रतीकारं[1] मन्ये प्रथमभव[2]देवस्य चरणम् ॥३३॥

विचिन्त्यैवं बालो द्रुतमुपससार स्वमनसा

प्रजापत्याख्यं तं विबुधमुख[3]देवं बहुनुतम्[4] ।

त्वमेवार्हो देव स्वशरणगतं मां समवितुं[5]

न जाने कोऽन्योऽस्ति त्वदपरवरो[6]ऽस्मिन् त्रिजगति॥३४॥

तमूचे देवो[7]ऽग्निं[8] द्विजसुत परं याहि शरणं

स देवो नेदिष्ठो[9] भवति तव संरक्षण[10]चणः ।

स बालश्श्रुत्वेदं हितमुपससाराग्निमाचिरात्

स्तवेनाऽनल्पेन[11] स्थिरमतिरथाऽशंसद[12]मलम् ॥३५॥

---

१. आत्मरक्षणोपायम् । २. "हिरण्यगर्भः समवर्तताग्रे" इति श्रुत्या प्रजापतिर्हि प्रथमो देवः । ३. देवानामाद्यम् । ४. वेदेषु बहुत्र स्तुतम्-अनेकत्र "प्रजापतिरकामयत" इति तत्तत्प्रकरणारम्भे प्रदर्शितम् । ५. सम्यक् परिपालयितुम् । ६. त्वत्तः अपर एव नास्ति, स्यादपि स त्वत्तो वरो न भवतीत्यभिप्रायः । ७. प्रजापतिः । ८. अग्निः । ९. अत्यन्तसमीपस्थः– भूमेर्हि अग्निरधिदेवता "भूरित्यग्निः" इत्यादिश्रुतिश्च । १०. पालनसमर्थः, "तेन वित्तश्चुञ्चुप्चणपौ" इति चणप् । ११. बहुभिस्तवैरित्यर्थः । १२. सर्वपावकत्वात् । अतः शुचिः, पावकः, शुक्रः इत्यग्नेर्नामान्तराणि ।

समुद्रं निर्निद्रं[1] त्वमिह सहसा[2] शोषयसि भो
स्त्वदायत्तास्[3]सर्वेऽदिति[4]सुतवशा जीवनकृते[5] ।
भवाम्भोधौ[6] त्वं नौर्भव मम मनश्शान्तिगतिदा[7]
त्वमीशः[8] पाशान्मे प्रणुद[9] परमेश त्रिजगताम् ॥३६॥
त्वमग्ने मग्नं मां विपदि सुखमुद्धारय[10] सुतम्[11]

---

१. क्रियाविशेषणम् - निर्गता निद्रा यस्मिन् कर्मणि तद्यथा तथा बहुजागरूकतया शोषयसि इति तात्पर्यम् । अथवा इदं पदं "समुद्रं" इत्यस्य विशेषणं भवतु, तथा सति सततं वीचीतरङ्गैः क्षुब्धमित्यर्थः । ज्वरादिरोगैस्सन्तप्तो जनः यथाऽनवरतं निद्रां विहाय रोदिति तथा अग्निनाऽऽपादितजलशोषकतापेनायं समुद्रोऽपि रोदितीव भवति, इति ध्वनिर्वा गम्योत्प्रेक्षा वाऽत्र भवितुमर्हति । २. अतिरभसेन । ३. तवाधीनाः । ४. दिविषदः- आदितेयाः इत्यर्थः । ५. "अग्निमुखावैदेवाः" इति श्रुत्या अग्निः हुतान्याहारद्रव्याणि देवानां सविधं प्रापयतीति अयमेव देवानां जीवनप्रदः-तथा च कविपुङ्गवः "वहति विधिहुतं या हविः" इति । ६. जननमरणात्मके संसारसागरे । ७. सुखेन पारं नाययितुं समर्था-त्वमेव सुखप्रद इति तात्पर्यम् । ८. त्रिजगतां प्रभुः । ९. नाशय - छिन्धि इति यावत् । १०. सुखेन - क्रियाविशेषणम् । ११. जगत्पितेति भावनया अग्निरस्यापि पिता अतोऽयं तस्य सुतः इति तात्पर्यम् ।

त्वमार्तत्राणेऽलं शपथं[1]मकरोर्विश्वविदितम् ।
त्वमेव प्रीत्या तं समव[2] मम हेतो[3]स्सुयशसं[4]
न चे[5]त्त्याज्योऽयं स्यात्सपदि[6] नियतं मां त्यजसि चेत् ॥
प्रसन्नो[7]ऽग्निर्देवो द्विजसुतमवादीत्सुमनसा
स[8] देवस्सर्वेषु प्रसवकररूपो हि सविता ।
अतस्त्वं याचेथा[9]स्सुलभमवितुं त्वां स कुशलः[10]
प्रभुश्शक्तो[11] दद्यात्सुखकरवरान् भृत्यतत[12]ये ॥३८॥

---

१. "परित्राणाय साधूनां .... सम्भवामि युगे युगे" । "अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" इति च भगवत्कृतः शपथः खलु । अत्र एतदुक्त्वा श्रीकृष्णः यथा परमात्मस्वरूपःतथा अग्न्यादयःस्सर्वे देवा परमात्मरूपाः इति भावनया अग्निस्तुतिर्विहिता । "इन्द्रं मित्रं वरुणमग्निमाहुरथो-दिव्यस्स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्ति" इति श्रुतिरत्र प्रमाणम् । २. सम्यक् रक्ष । ३. मम रक्षणद्वारा । ४. समीचीनं यशः (कीर्तिः) यस्य (शपथस्य) तम् । ५. त्वया स शपथः त्याज्यस्स्यात्-त्वं तं शपथं त्यज इत्यर्थः । ६. निश्चयेन । ७. सुप्रीतः । ८. प्रसिद्धः । ९. 'याचृ'धातोः विधिलिङात्मनेपदमध्यमपुरुषैकवचनमिदं रूपम् । अनेन "त्वं" इति कर्तृपदमध्याहार्यं भवति । १०. समर्थः । ११. दक्षः-सर्वसंपद्युक्त इति भावः । १२. सेवकजनेभ्यः । अनेन सामान्यर्थसमर्थनरूपार्थान्तरन्यासेन त्वं मम रक्षणे शक्तः अतो मां रक्ष, यतस्त्वं प्रभुः अहं भृत्य इति विशेषार्थसमर्थनरूपार्थान्तरन्यासो व्यज्यते ।

स ऐट्टौत्[1] भक्त्या विपदि सवितारं भयहरम्[2]
नमस्ते भानो त्वं भवसि भवबन्धो[3] हितकरः[4] ।
त्वदीया सत्कीर्तिर्[5] दिशि दिशि नभोन्ते[6] सुविदिता
मदीया याच्ञा त्वामनुपदमिहाऽऽयाति नियता ॥३९॥
क्व यासि ब्रूहि त्वं त्वदनुगतमेनं तव सुतं
विहाय प्रागल्भ्याद्[10] वनचतुरोऽप्यार्तिहरणात्[12] ।
हृदि त्वां बध्नामि स्वयमिह विभो चिन्तय[13] ह भो–
विमुक्तिर्[14] बन्धानामिह भवति नौ[15] वैकसमये[16] ॥४०॥

---

१. तुष्टुव-ईडस्तुतौ इति धातोः लङि रूपम् । २. सर्वभय-परिहारकम् । ३. भवे बन्धुः-तस्य सम्बुद्धिः । अस्मिन् संसारे त्वमेक एव मम बन्धुः-न माता-न पिता-न मित्रम्-नान्यः कोऽपि । ४. त्वं न केवलं भयहरः किन्तु हितकरश्च-यद्यन्मे हितं तस्य त्वं सम्पादक इत्यभिप्रायः । ५. "मित्रो दाधार पृथिवीमुत द्याम्" इति श्रुतिभिर्विहिता तव सत्कीर्तिरिति तात्पर्यम् । ६. आकाशे इति यावत् - यावन्नभः । ७. त्वत्पदमनु-अविनाभावेनेत्यर्थः । ८. न कदापि व्यभिचरिता । ९. त्वच्चरणगतमिति यावत् । १०. धार्ष्ट्येन - प्रभुत्वशक्तिमत्वादिमदेन । ११. रक्षणसमर्थोऽपि । १२. विपच्छमनात्-मम विपदं परिहृत्य मां रक्षितुं त्वं समर्थ इति भावः । १३. आलोचय-कथं ते बन्धविमुक्तिरिति-। 'ह' इति निपातोऽत्र अवधारणार्थकः । १४. बन्धपरिहारः । १५. आवयोः । १६. एकस्मिन्नेव काले-ममात्र यूपे बन्धः, तव तु मम हृदये बन्धः, यदा त्वं मम बन्धं परिहरसि तदा तवापि बन्धविमुक्तिरिति व्याजोक्त्या मम मोक्षकालपर्यन्तं त्वामेव ध्यायामीति भावः आलङ्कारिकसमयोचितः अत्र रूपकाद्यलङ्कारोक्त्या दर्शितः ।

तमूचे सम्मोदाद्विपदमनुचिन्त्यैव[1] सविता
नियुक्तो[2] राज्ञे[3] त्वं कलय वरुणाय प्रथमतः ।
स एव त्वां मुञ्चेत्स्वहितबहुपाशात्सुमुदितै-[6]
स्ततस्तं रक्षायै शरणमचिरादाप्नुहि परम् ॥४१॥

तथेत्युक्त्वा बालो वरुणभवने प्राप शरणं
स्तुवे त्वां राजानं सदयहृदयं भक्तिवशगम् ।
विभो स्वामिन् पाशान् मम तनुगतांश्छिन्धि कृपया
तवाहं दासोऽस्मि प्रियतरमितः किं वद विभो ॥४२॥

---

१. कथं - केन वाऽस्य विपत्परिहृता भवेदित्यालोच्य । २. हरिश्चन्द्रस्य प्रतिज्ञापालनार्थं पशुत्वेन नियमितः । ३. वरुणाय राजेति वरुणस्य वैदिकी संज्ञा । ४. यदा त्वं रोहितेन क्रीतः तदारभ्य । ५. त्वद्देहे बद्धाननेकान् पाशान्-अस्मिन् संसारे सम्प्राप्तान्-अनेकक्लेश-रूपान् पाशांश्च परिहरतीति "बहु" इति पदप्रयोगेण ध्वनिः । अस्य वरुणस्य 'पाशीति' नाम, अतः सर्वे पाशाः अस्य हिता एव धर्मव्यवस्थाबुध्या - "मिनीमसि द्यवि द्यवि यत्किञ्चेदं वरुणदैव्ये जनेऽभिद्रोहम्" इति श्रुतिरेवात्र प्रमाणम् । ६. सुप्रसन्नः । ७. समर्थम् । परगतिदं वा । ८. रक्षणार्थमित्यर्थः । ९. दयार्द्र-हृदयमिति यावत् । १०. भक्तिवश्यो हि परमात्मा अतस्तद्रूपा वरुणादयोऽपि तथैव । ११. देहे बद्धान् । १२. इतोऽपि किमधिकप्रियतरमिति प्रश्नकाका न किमपीतः प्रियकरमिति नञर्थावधारणं सुस्पष्टम् । भक्तानां दासत्वमेव देवतानामत्यन्त-प्रियमिति भावः ।

अहो क्रीडेयं[1] ते प्रथममददा[2]स्तस्य तनयं
हरिश्चन्द्रस्य त्वं समय[3]विहितं रोहितशिशुम् ।
गतेऽरण्ये तस्मिन्नृपतिमकरो रुग्णवपुषं[4]
पुनर्मां[5] गृह्णासि प्रतिनिधि[6]तया तस्यै[7] दयया[8] ॥४३॥
विलासो मद्दुःखादिति तव सृति[9]श्चित्रमहिमा[10]
न जाने कं वान्यं स्वकृतमकृतं[11] कर्तुमनसम्[12] ।
अतस्त्वं मां रक्ष स्तुतिशतकृतं[13] पूजनमिदं

---

१. क्रीडा-विलासः । विलासपराणां हि परदुःखेषूपेक्षा "लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् । शेषे धराभराक्रान्ते शेते नारायणस्सुखम्" इत्यादिमहाकवेरन्यापदेशवाक्यमत्रोदाहरणम् । २. 'दा' धातोर्लङि मध्यमपुरुषैकवचने रूपम् । ३. यदि मम सुतो भवति तेनैवाहं त्वां यजे इति समयेन सम्पादितम् । ४. महोदरेण पीडितदेहं । ५. अपेक्षसे । ६. रोहितस्य स्थाने । ७. रोहितस्य । रोहितस्य प्रतिनिधितया इत्यन्वयो युक्तश्चेत्-तदा'तस्ये'ति सर्वनाम्नः पूर्वपरामृष्टं पदं किम् ? यदि 'नृपति'मिति पदं तदाऽनन्वयः । यदि 'रोहितशिशु'मिति पदं तदा दूरान्वयः । एतदनुपपत्तिपरिहाराय 'तस्ये'ति पदे 'दयया' इति पदेनान्विते सति "सम्बन्धार्थे षष्ठी"ति न्यायात् नृपतौ वा रोहिते वा 'दयां कृत्वा' इति समन्वयः सुलभः इत्यलं व्याकरणधोरणीविचारेण । ८. करुणया । ९. अयनं-मार्गः-सरणिरिति यावत् । १०. चित्रः (वक्तुमशक्यः) महिमा यस्यास्सा । ११. निरस्तम्-परिहृतमिति यावत् । १२. "तुं काममनसोरपी"त्या-दिना मकारलोपः । १३. स्तुतिशतेन स्तुवे इति तात्पर्यम् ।

तवास्तु स्वामिन्मे शृणु कृपण[1]वाचं सकरुणाम्[2] ।।४४।।
प्रसादादग्नेस्त्वं भवसि सुखभाग्[3] दुःखदमनं[4]
स्तुहि त्वं भक्त्या तं जहिहि[5] शुच[6]मित्याह वरुणः ।
तथाऽसावग्निं द्राङ्मनसि कलयन्[7]मोदभरित[8]
स्तवैस्तुष्टावाऽहो श्रुतिविदित[9]भावैर्बहुविधैः[10] ।४५।।
मुखं[11] त्वं देवानां गृहपति[12]रसि ब्राह्मणगृहे[13]
दह त्वं मे पाशान् दहसि खलु[14] सर्वं निजबलात्[15] ।
न चेत्त्वं तद्धर्मं[16] त्यज सपदि शीतो[17] भव विभो
शरण्यं हित्वा त्वामिह शरणमन्यं न कलये ।। ४६ ।।
ततस्तुष्टो[18]ऽग्निस्तं पुनरवददेते सुमनसः

---

१. अनाथस्य-दीनस्य वाचम् । २. सशोकाम् । ३. सुखभूमिः। ४. दुःखपरिहारकम् । ५. ओहाक्-त्यागे इति धातोः लोटि मध्यमपुरुषैकवचने रूपम् । ६. शोकम् । ७. भावयन् । ८. मम स्तवैः पूर्वपरिचित एवाग्निः- इदानीं वरुणवचनेन अग्निमुपगच्छतो मम कार्यं सफलं भवत्येवेति भावनया यो मोदः जातः तेन पूर्णस्सन् । ९. श्रुतिषु प्रसिद्धाग्निगुणविधिभिः । १०. अनेकप्रकारैः । ११. हविर्वहने प्रथमः-मुख्यइ त्यर्थः । "अग्निमुखा वै देवाः" इति श्रुतिः । १२. गृहदेवता-गृहस्वामीति यावत् । १३. इदानींतनकाले येषु गृहेषु गार्ह्याग्निर्दृश्यते ते ब्राह्मणगृहा एवेति मत्वा ब्राह्मणगृहे इत्युक्तम् । १४. खल्विति काकुः । १५. आश्रयाशः- दहनः इत्यादिना तस्य बलं विदितमेव । १६. दहनधर्मम् । १७. विरुद्धधर्मा भव । १८. प्रसन्नः ।

सदा विश्वे देवास्त्वदवनचणास्तान्[1] स्तुहि भरात्[2] ।
चकारैवं बालो दृढमति[3]बलाद्ध्यानकुशलः[4]
करोति प्रत्याशां[5] सुखपरधियं[6] विश्ववचनैः[7] ॥ ४७ ॥
अहं मुग्धो[8] बालो[9] विपद[10]शितदेहो हतबलः[11]
परं विश्वे[12] देवा[13] भवत खलु यूयं कृतधियः[14] ।
भवेत्कारुण्याद्वो मम सुगतिरित्येवमधुना
स्तुवे युष्मान् विश्वान् नियतमनसा[15] स्तोत्रशतकैः ॥४८॥
स इन्द्रो देवानां प्रभु[16]रथ बली[17] स्वेष्ट[18]प्रातिद-
स्स साधुः[19] कार्याणां परिणति[20]विदेनं स्तुहि मुदा ।

---

१. रक्षणसमर्थान् "तेनवित्तश्चुञ्चुप्चणपौ" इत्यादिना 'चणप्' प्रत्ययः । २. आधिक्यात्-स्तवने आधिक्यं तु अधिकस्तोत्रकरणम् । स्तोत्रेष्वाधिक्यम् - विश्वेदेवस्तोत्रहेतोः बहुदेवनिमित्तकम् । ३. स्थिर-मनस्कतया । ४. ध्यानकर्मणि विद्वान्-अनेकशः अनेकदेवताविशेषानुद्दिश्यासकृद्ध्यानस्याभ्यस्तत्वात् ध्यानेऽस्य कौशल्यमित्याकूतम् । ५. कार्यसिद्धिप्रतीक्षणम् । ६. सुखं भवतीति प्रत्ययम् । ७. सर्वेषां वचनैः । ८. अज्ञः । ९. अननुभवशाली । १०. आपद्ग्रस्तः । ११. दुर्बलः । एतानि विशेषणानि विषमालङ्कारप्रयोजकानि; उत्तरत्र तद्विरुद्धविशेषणपदप्रयोगात् । १२. विश्वे इति बहुवचनेन "सङ्घे शक्तिः" इति न्यायाद्बलं लोकानुभवश्च व्यज्यते १३. देवाः इति प्रयोगेण द्योतनशीलाः इति अत एव १४. । धीमन्तः- नतु मुग्धाः-निरापद इति यावत् । १५. दृढचित्तेन । १६. स्वामी । १७. बलिष्ठः । १८. इष्टप्राप्तिकरः । १९. सज्जनः अतः सर्वेषां पूज्यः । २०. कार्यकारणज्ञानवान् ।

स शक्तो निर्हातुं तव बत सुदुःखं सुलभत-
स्स ते शान्तिं दद्यादिति तमवदन् विश्वविबुधाः ॥४९॥
अथ श्रान्तो बालः स्वमनसि तमिन्द्रं विदितवान्
प्रभुस्त्वं देवानां मशकसदृशोऽहं लघुमतिः ।
अशेषाणां नाथः परमहमनाथस्सुविदितः
कथं सम्बन्धो नाविति न कुरु भेदं मयि विभो ॥५०॥
शरण्यस्साक्षात्त्वं नृपतितनयस्यासि सुलभा
त्वमेवं मे जिष्णो भव सुहृदयो भीतिहरणः ।
अहं दुःखी लोके त्वमिह परिपाल्याऽसुमलसं
जगत्पालो भूया भव सुयशसां पात्रमिह भोः ॥५१॥

---

१. असहनीयव्यसनम् । २. दुखपरिहारद्वारा मनश्शान्तिम् । ३. विश्वेदेवा इत्याशयः । ४. किमेते एवं वदन्ति - स्तुतास्सर्वे अन्यमन्यं दर्शयन्ति । एतेषां वचनमनुपालनीयं वा न वेति संशयाक्रान्तः । ५. ध्यानेन विभावितवान् । ६. अमराणाम् । ७. अल्प इति यावत् । ८. अल्पज्ञः । ९. सर्वेषां भूतानाम् । १०. पित्रादिभिस्त्यक्तः । ११. आवयोः-समयोरेव सम्बन्धश्शोभते न तु विषमयोरिति लोकव्यवहारः । तथापि अल्पोऽपि प्रपन्नः स्वप्रभोरंश एवेति तत्वदृष्ट्या त्वं मां रक्षितुमर्हसीति भावः । अत्र श्लोकद्वयेऽपि विषमालङ्कारसरणिस्स्पष्टा । १२. रक्षकः । १३. प्रत्यक्षो भूत्वा । १४. रोहितकुमारस्य । १५. प्रयत्नपूर्वकं स्तुतोऽपि त्वं मम शरण्यो न भवसीति ध्वनिः । १६. समीचीनं हृदयं यस्य सः- प्रसन्नात्मेति यावत् । १७. अद्य प्राप्तानुभूयमानमरणभयनिवारक इति भावः । १८. इन्द्रः लोकपालकः-वृद्धश्रवाः इत्यादीनि यानि यशांसि तेषाम् ।

प्रसन्नेन्द्र[1]स्तस्मै रथमदित हा[2] स्वर्णकलितं[3]
स बालस्तं स्तोत्रैर्मनसि बहुधाऽऽशंसदमरम्[4] ।
स्तुहि त्वं नासत्यौ[5] भवति खलु ताभ्यां[6] तव हितं[7]
मदुक्तिं[8] पाहीति प्रियमवददिन्द्रस्सुवचसा[9] ॥५२॥
तथेति स्वान्ते[10]ऽसौ प्रमुदित[11]मनास्तोत्रमकरो-
युवां स्थो[12] देवानां परमभिषजौ लोकहितदौ ।
अहं याचे वां भोस्सपदि मनसश्शान्ति[13]मिह मे
प्रसन्नौ भूयास्तं[14] मयि विपदि युष्मत्पद[15]गते ॥५३॥

---

१. प्रसन्नश्चासौ इन्द्रश्चेति कर्मधारयः- इन्द्रः प्रसन्नस्सन् इत्यर्थः । २. हा ! इत्याश्चर्ये । इतः पूर्वं स्तुतानां देवानां मध्ये न कोऽपि कमपि वरं ददौ, इन्द्रस्तु सुवर्णमयं रथं ददाविति सन्तोषजनितमाश्चर्यम् । ३. सुवर्णेन निर्मितम् । ४. देवम् । ५. अश्विनीदेवते । ६. नासत्याभ्याम् । ७, कश्चिदुपकारः-कोऽसावुपकारः ? तौ देवभिषजौ, ताभ्यां तव मनोरोगः परिह्रियते इति ध्वनिः । ८. मद्वचनम् । ९. हितोक्त्या । १०. स्वान्ते स्तोत्रमकरोदित्यन्वयः- स्वान्ते-मनसि । ११. सुवर्णरथदानादिन्द्रोऽभूदस्यातिप्रियः, तत्तस्यैव वाक्ये परमादरः, अतस्स्वकार्यम् अश्विनीदेवतामुखेन सफलं भवतीति भावनया प्रमुदितं मनः यस्य सः । १२. अस भुवि इति धातोर्लटि मध्यमपुरुषद्विवचनरूपम् । १३. मनोरोगपरिहारद्वारा समाधानं । १४. 'भू' सत्तायामिति धातोराशीर्लिङि मध्यमपुरुषे द्विवचनरूपम् । १५. युवयोः पादाश्रिते ।

निशम्येदं दस्रौ[1] निभृतमुपयाहि[2] त्वमुषसं
प्रसन्ना सा तेऽस्यादियमहह[3] काले परिणतिः ।
स्तुहि त्वं देवीं तां त्वदुपचयकालाधिलसितां[4]
सकालं[5] कर्मैव[6] प्रभवति फलं दातुमिह नः ॥५४॥

स तुष्टाव[7] स्तोत्रैरुषसममलां[8] शान्तहृदयां[9]
त्वदेकायत्ता[10] मे सुखगतिरलं[11] देवि विदिता[12] ।
उषा[13] भोः कालाच्चिरं[14] ननु परिचिता मातरिह मे
सुतत्राणं[15] मातुर्विहितमिति कर्तव्यमहहा[16] ॥५५॥

उषास्तस्मै प्रीता द्विजमिति जगादाऽऽशु सदया[17]

---

१. अश्विनौ । २. निश्चलं यथा तथा - अस्य उपयाहीति पदेवान्वयः । ३. कालपरिणामेन अत्यद्भुतव्यापाराः प्रादुर्भवन्तीत्याश्चर्यद्योतकोऽयं निपातः । ४. तव अनुकूलकालस्य अधिदेवताम् । ५. कालसहितम् । ६. इदानीं वा पुरा वा कृतं कर्मैव । ७. "स्तु"धातोर्लिटि रूपम् । ८. दोषरहिताम्-प्रभाशालिनीमिति यावत् । प्रभाकरपुर उदयाद्धि उषःकालस्य दीप्तिः-तदा सर्वेषामन्तरङ्गं शान्तं निर्मलं च भवतीति सर्वानुभवसिद्धम् । ९. अतस्सर्वेषां शान्तिप्रदत्वात्-शान्तहृदयामिति प्रयोगः । स्वयमशान्तहृदया अन्येभ्यः कथं वा शान्तिं दद्यात् । १०. त्वदधीना । ११. सुखप्राप्तिः । १२ दस्राभ्यामेवमभिहिता । १३. उषाः इति स्त्रीलिङ्गप्रथमैकवचनम् । १४. बहुकालात्, १५, पुत्रजनरक्षणं मातृजनकर्तव्यलक्षणं खलु । १६. तथापि त्वयाऽहं एतावदुपेक्षितः इत्याश्चर्यम् । १७. करुणार्द्रचित्ता ।

सुतं[1] त्वं मा भैषीर्निखिल[2]विबुधास्ते सुमनसः[3] ।
शुभं ते दद्यासु[4]स्तव हितपराः प्रीतिभरिताः
शुभोदर्कं[5] ब्रूते स परिणत[6]कालः खलु सदा ॥५६॥
ब्रुवाणामेवं सोऽप्याचिरमुषसं स्तोत्रपटलैः
स्तुवन्बन्धात्[7]सद्यो निखिलकलुषान्[8]मोचित[9]तनुः ।
अहो मन्त्रे शक्तिस्तवमधिगते[11] देवमहिमा[12]
न[13] किं वा लोकेऽस्मिन् कलयति न किं साधयति वा ”
सृत[14]स्तेनाऽऽद्य[15]र्चा कटिघटितपाशोऽभिहितया

---

१. सुत इति सम्बोधनम् अत्यन्तवात्सल्यद्योतकम् । २. प्रजापतिप्रभृतयः । ३. समीचीनं मनः येषां ते-प्रसन्नहृदया इत्यर्थः । ४. 'दा' धातोराशीर्लिङि प्रथमपुरुषबहुवचनरूपम् । ५. शुभोदर्क-सकलदुःखपरिहारद्वारा शुभप्राप्तिमिति यावत् । ६. कालकर्मसंयोगेन सर्वं निष्पद्यते खलु-अतः यदा कालः अनुकूलस्तदा अपेक्षितं - कृतं वा कार्यं सफलं भवतीति सामान्योक्तिः । ७. पाशबन्धात् ८. समस्तपापेभ्यः । ९. मोचिता तनुः यस्य सः । १०. उषस्तवमहिम्ना पाशबन्धाद्यथा, तथैव समस्तपापेभ्योऽपि अहं विमुक्त इत्याश्चर्यं द्योतयत्यत्र 'अहो' इति निपातः । ११. मन्त्रे तदेकनिष्ठया स्तोत्रार्थे अभिहिते सति तन्मन्त्रनिष्ठा शक्तिः । १२. तैर्मन्त्रैस्तुतानां देवानां महिमा च सर्वेष्टार्थान् प्रददातीति तात्पर्यम् । १३. सर्वं कलयति सर्वं साधयतीत्युक्तेः अवधारणार्थमत्र नञर्थप्रश्नरूपोऽयं प्रयोगः । १४. 'सृ' सरणे इतिधातोः कर्तरि 'क्त' प्रत्ययान्तोऽयं शब्दः यौगिकार्थे प्रयुक्तः । विगलित इत्यभिप्रायः । तेन (शुनश्शेपेन) अभिहितया आद्यया ऋचा कटिघटितपाशस्सृतोऽभूदित्यन्वयः । १५. आद्यमन्त्रेण ।

द्वितीयर्चा तद्वच्छिरसि कृतपाशो विगलितः ।
तृतीयर्चा पादे विहितदृढपाशोऽपि वियुतं[1]-
स्समुत्सृष्टो[2] यूपात्स रविरिव मेघा[3]द्विलसितः[4] ॥५८॥
विमुक्ते[5] बालेऽस्मिन् ऋषिसमुदयो[6]ऽभूत्समुदयः[7]
क्रतुः पूर्णो[8] वर्णा[9]श्श्रुतमहिमकर्णा[10]स्समभवन् ।
हरिश्चन्द्रो मुक्तः स्वतनुगतरोगा[11]च्छपथतं[12]-
स्तदा सर्वे हृष्टा[13]श्शुभकृति[14]बला रोहित[15]मुखाः ॥५९॥
ततस्सर्वे यागं सफलयितुमेवाऽपशुकृतं[16]

---

१, विगलितः । २. सम्यक् - विमुक्तः- यूपादित्यभिप्रायः । ३. मेघेभ्यो विमुक्तस्सूर्यो यथा प्रकाशते तथेत्युपमा । मेघादिति जात्येकवचने प्रयोगः । ४. प्रकाशितः । देवतानुग्रहेण पूर्वस्मादपि तेजसोऽधिकतरं तेजस्वी सन् - चकासेति भावः । ५. बन्धादुत्सृष्टे । ६. गणः । ७. समीचीनः-उदयः- हर्षाविर्भावः यस्य सः- सर्वे ऋषयः परमहर्षयुक्ता आसन्नित्यभिप्रायः । ८. पूर्णप्राय एव । ९. ब्राह्मणादयः । १०. श्रुतः- आकर्णितः महिमा-शुनश्शेपसम्बन्धपाशविमोचनप्रकारप्रभावो याभ्यां तौ (पञ्चमीबहुव्रीहिः) तादृशौ कर्णौ येषां ते (षष्ठीबहुव्रीहिः) अयं बहुव्रीहिगर्भितबहुव्रीहिसमासः । ११. महोदरात् । १२. 'मम सुतेन त्वां यजे' इति वरुणेन सह कृतप्रतिज्ञातः । १३, प्रमोदभरिताः । १४. शुभा च सा कृतिश्च सैव बलं येषां ते दैवादापादितशुभप्राप्तियुक्ता इति फलितोऽर्थः । १५. रोहितादयः- रोहितस्यापि शुभोदर्कोऽभूदिति भावः । १६. पशुं विना निष्पादितम् ।

शुनश्शेपं चक्रुस्सपदि ननु ने[1]तारमृषयः ।
स या[2]गं तं सोमाऽभि[3]षवमुखमाद्यन्त[4]विहितं
सुखं निर्वर्त्याहो मुदितमनस[5]स्तां[6]श्च कृतवान्[7] ॥६०॥
वेदोक्तां[8] शुभदां[9] मनोहर[10]कथा देवप्रियां[11] सर्वदा-
वृत्तात्ता[12] वरदां[13] धराधिपहरिश्चन्द्रस्य सत्यात्मनः[14] ।
सत्यात्तां[15] हितदा[16] च रोहितशुनश्शेपाप्तभाग्योदया[17]
जीयात्सा बहुधा प्रशंसितमहाभूतिप्रदा[18] मोक्षदा[19] ॥६१॥

---

१. मुख्यम् । २. सोमाभिषवाख्यम् । ३. सोमाभिषेचनीये कर्मणि मुख्यम् तंत्रक्रमेण स्वदृष्टमन्त्रविशेषैर्होमं चकारेत्यर्थः । ४. अस्य यागस्य आदिः यः अन्त्यं यत्-तन्मध्ये यानि कर्तव्यनि तानि सर्वाणि कर्माणि । ५. मोदयुक्तानि मनांसि येषां तान्-सन्तोषभरितानिति यावत् । ६. ऋत्विगादीन् । ७. चकारेत्यर्थः । ८. ऋग्ब्राह्मणे प्रतिपादिता । ९. दुःखपरिहारपूर्वकं कल्याणप्रदा । १०. मनोरञ्जिका आख्यायिका । ११. देवतानां प्रीत्यास्पदा । १२. वृत्तेन-हरिश्चन्द्रचरितेन-आत्ता - युक्ता । १३. इष्टार्थप्रदा । १४. सत्यसन्धानरूपः आत्मा (मनः) यस्य तस्य । १५. सत्यमहिमयुक्ता । १६. सुखप्रदेति यावत् । १७. रोहितशुनश्शेपभ्यां प्राप्तः भाग्यस्य-श्रेयसः- उदयः- आविर्भावः यस्यास्सा । तयोः कल्याणदायिनीति यावत् । १८. अनेकैरनेकप्रकारेण प्रशंसितत्वात् सर्वसम्पत्प्रदेति तात्पर्यम् । अत एव श्रेयस्करा । १९. मुक्तिप्रदा अनेन वर्षषट्कं यावदरण्ये कृततपसो रोहितस्य मोक्षप्राप्तिः-समस्तदेवतानुग्रहेण भक्ताग्रगण्यस्य शुनश्शेपस्य बन्धविमुक्तिश्च एतत्काव्यप्रतिपादितेति ध्वन्यते ।

इति श्री–वेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके शुनश्शेपोदन्तकलिते "हरिश्चन्द्रचरितकाव्ये" चतुर्थस्सर्गः। समाप्तोऽयं ग्रन्थः। ॐ तत्सत्॥

---

अस्मिम् सर्गे - धनतृष्णा - नीचकार्योद्यमः - निर्घृणता-इत्यादि निषिद्धधर्माः,सत्यशीलता-दैवभक्तिः-देवताप्रसादभाजनम्-इत्यादिविहित-धर्माश्च लोकहिताय बोधिता वर्तन्ते ।

अन्तिमपद्यम् – "शार्दूलविक्रीडित" वृत्तनिबद्धम्-तल्लक्षणम्- "सूर्याश्वैर्मसजास्स्तताास्सगुरवः शार्दूलविक्रीडितम्" इति ।

इति श्री वेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके शुनश्शेपोदन्तकलिते "हरिश्चन्द्रचरितकाव्ये" चतुर्थसर्गस्य स्वेनैव रचिता "गम्भीरपदार्थबोधिन्याख्या" व्याख्या समाप्ता ।

॥ समाप्ता च हरिश्चन्द्रकाव्यव्याख्या ॥

ॐ तत्सदिति मङ्गलाशीः

॥ शुभं भवतु ॥

श्रीः

# नाभानेदिष्ठकाव्ये प्रथमस्सर्गः ।

---

सत्यधर्मस्वरूपो[1] यो धर्मं[2] रक्षति यस्सदा ।
स्तुत्वा तं सत्यवाक्येन[3] सत्यर्षेश्चरितं[4] ब्रुवे ॥१॥

आसीत्पुरा[5]ऽत्र[6] नृपतिर्मनुनामधेयः

---

अस्मिन् सर्गे अन्तिमश्लोकं विना सर्वाणि पद्यानि वसन्ततिलकावृत्तनिबद्धानि । तल्लक्षणम्-"उक्ता वसन्ततिलका तभजा जगौ गः" इति । अस्मिन् पद्ये सत्येत्यादिना परमपुरुषस्य नमस्काररूपं मङ्गलं कृतमित्यवधेयम् । यद्यपि स्तुत्वेति क्त्वा प्रत्ययान्तपदेन स्तोत्ररूपं वाचिकं कर्माऽवबोध्यते, तथापि तन्नमस्काररूपे कर्मण्यन्तर्भवत्येव । तच्च ध्यानस्तवनरूपमानसिकवाचिककर्मणोरप्युपलक्षणम् । १. सत्यं धर्मः स्वरूपं यस्य सः । सत्यस्वरूपः "सत्यं परं धीमहे" इति श्रीमद्भागवतस्य आदिमश्लोके उक्तत्वात् । धर्मस्वरूपः- "धर्मो विश्वस्य जगतः प्रतिष्ठे" ति श्रुतिः । अथवा सत्यम्-सत्-सद्रूपः, धर्मः "चोदनालक्षणो धर्म" इति जैमिन्युक्त्या चोदना - विधिः- स च लक्षणया आत्मव्यापारः; स तु चिच्छक्तिसम्बन्धं विना न भवतीति चिद्रूपः । अनेन सच्चिद्रूप इति फलितम् । २. अधिकारिणः कर्तव्यम्, लौकिक कर्मसन्ततिम् । ३. वेदवाक्येन-वेदवाक्यान्यनुसृत्येति तात्पर्यम् । ४. सत्यवचसो नाभानेदिष्ठस्य । ५. सृष्ट्यारम्भे । ६. अस्मिन् लोके ।

प्रामाण्यमस्य वचसां श्रुतितोऽपि वेद्यम् ।
तद्धर्मशास्त्रसरणौ प्रथमस्स लोके
मान्या मनुस्मृतिरिति प्रथिता प्रभावात् ॥२॥
कालेन तस्य नृपतेस्तनयाः प्रजाताः
देवर्षितुल्यविभवा रविचन्द्रभासः ।
तेषां वरो हितकरः प्रचकास नाभा-
नेदिष्ठनाममहितस्तनयः कनिष्ठः ॥३॥
माता पुपोष तनयं शिशुवत्सलाऽमुं

---

१. "यद्वै किञ्चिन्मनुरवदत्तद्भेषजम्" इति श्रुतिः । तया अङ्गीकृतप्रामाण्यम् मनोर्वचसामस्तीत्यन्वयः । अत्र अपिशब्दबलात् लोके याज्ञवल्क्यादिस्मृतिकाराः मनोर्वचसां प्रामाण्यमङ्गीकुर्वन्ति- इदानीन्तनव्यवहारेषु अधिकरणस्थानेषु मनुस्मृतेः विशेषांशाः प्रमाणपदमधिरोहन्ति इत्यर्थोप्यवगम्यते । २. अतः । ३. धर्म- शास्त्राणाम् रचनामार्गे । ४. सम्मानयितुम् योग्या-सर्वैरप्यादरणीया । ५. प्रसिद्धा । ६. श्रैष्ठ्यात्-तत्रोक्तविषयप्रतिपादनमहिम्नेति यावत् । ७. युक्तकाले । ८. प्र इति उपसर्गबलात् अनेके पुत्राः जाता इति गम्यते ९. देवर्षिसमानाः- योग्या इति संक्षेपार्थः । १०. रविरिव प्रतिभाशालिनः चन्द्र इव आह्लादकरा इति भावः । ११. प्रशस्ततमः । १२. लोकोपकारक्षमः । १३. स्वभ्रातृभ्योप्यधिकप्रसिद्धोऽभूदिति तात्पर्यम् । १४. तन्नाम वेदप्रसिद्धमितिभावः अथवा तन्नाम्ना युक्त इति सामान्यार्थः । १५. मातुः कनिष्ठपुत्रे वात्सल्यं सहजम् शिशुत्वे तु विशेषवात्सल्यम् । अतः शिशुवत्सलेति ।

तद्भृति[1]पिता च करणै[2]र्व्यसनाशनाद्यैः ।
बन्धुप्रियो[3]ऽभवदयं बहुलीलया[4]त्तः
कालात्क्रमात्स ववृधे[5] सितबाल[6]चन्द्रः ॥४॥

वर्षे[7] स पञ्चममिते विधिनोपनीतो
गेहे गुरोस्समवसद्गुरुतुल्यबुद्धिः[8] ।
सद्[9]ब्रह्मचर्यविधिना विदधे[10] [11]विधेयो
वेदेषु शास्त्रसमयेषु[12] महाव्रतं[13] सः ॥५॥

[14]इष्टं गुरोर्यदखिलं समयेषु[15]मोदा-

---

१. पुपोषेत्यर्थः । २. साधनैः । ३. बन्धूनां प्रियः बन्धवः प्रियाः यस्येति वा । ४. अनेन शरीरव्यायामादयोऽप्युपलक्षिताः । ५. वृधुधातोः लिडात्मनेपद्येकवचनरूपम् । ६. चन्द्रस्य कलावृद्धिहेतुत्वात्सित इति पदम् - सितपक्ष इत्यर्थः- शरीरवृद्धिस्तु कालक्रमिका - अतः बालचन्द्र इति पदम् । व्यस्तरूपकम् । ७. प्रतिभाशालिनां पञ्चमे वर्षे उपनयनं शास्त्रविहितम् । ८. गुरोः- बृहस्पतेः बुध्या तुल्या समाना बुद्धिर्यस्य सः ९. समीचीनं ब्रह्मचर्यम् - तच्च गुरुशुश्रूषा वेदाध्ययनादि । १०. महाव्रतं विदधे इत्यन्वयः । ११. गुरुजनादेशकारीति यावत् । १२. अत्र समयशब्दः सिद्धान्तपरः, अतः बहुवचनम् । १३. ब्रह्मचर्यं हि प्रथमाश्रमः, तत्र वेदशास्त्रेषु विद्याभ्यासः मुख्यं कार्यम्-तन्निष्ठया समासादितमिति महाव्रतमित्युक्तम् । अथ चतुर्भिः ब्रह्मचारिकर्तव्यप्राकारान्विशदयति कविः। १४. गुरुणाऽपेक्षितम् । १५. कालेषु अविलम्बेनेति भावः ।

त्कुर्वन्स शिष्यजनताधुरमाप धीरः ।
एवं निनाय दिवसान्बहुसंख्ययात्तान्
शुद्धो बभूव हृदये गुणवृत्तशीलैः ॥६॥
ब्राह्मे मुहूर्तसमये हितसुप्तिबोधो
गत्वा सुदूरमुटजात्कृतशौचकार्यः ।
पुष्पाणि देवयजनोचितगुल्मजानि

---

१. अग्रभागम्, कार्यभारं वा । २. सुमनाः, शिष्यजनैः यद्यत्कर्तव्यं तत्सर्वमयमनिर्वेदं यथा तथा कुर्वन्गुरोरतिप्रियोऽभूदिति भावः । ३. प्रतिवेदाध्ययनाय द्वादशसंवत्सरा इति गणनया चतुर्वेदाध्ययनाय अष्टाचत्वरिंशद्वत्सराः-त्रय्याः केवलं षट्त्रिंशद्वत्सराः-ऋग्यजुषोः चतुर्विंशद्वत्सराः स्वशाखाभूतवेदाध्ययनाय द्वादशवत्सराः इति विद्याभ्यासकालनियमः । ४. चित्ते । ५. गुणाश्च वृत्तं च शीलं चेति बहुपदद्वंद्वसमासः- तैः, गुणाः- सत्यवचनादयः, वृत्तम्-नित्यकर्मानुष्ठानादिकम्, शीलम्-करणत्रयैकरूपस्वभावः । ६. पञ्चपञ्चोषःकाले रात्रौ पञ्चविंशतिघटिकानंतरं उदयात्पञ्चघटिकात्पूर्वभावी कालः- उदयात्पूर्वम् चतुर्थघण्टावादनसमय इत्यभिप्रायः । ७. हिता-त्यक्ता सुप्तिर्यस्मिन्सः तादृशः बोधः यस्य सः इति बहुव्रीहिगर्भबहुव्रीहिः । अत्र हित इति हि गतौ वृद्धौ च इति धातोः कर्मणि क्तप्रत्ययान्तपदम् । अथवा हितः (इष्टः) सुप्तेस्सकाशाद्बोधः यस्य सः इति वा । ८. पर्णशालायाः । ९. कृतं निर्वर्तितं मलनिवृत्यादिरूपं कार्यं येन सः । १०. कानिचित्पुष्पाणि - मध्यमतन्तुरहितानि, निर्गन्धानि दुर्गन्धानि - अशुचिप्रदेशजातानि वा देवपूजायोग्यानि न भवन्ति । गुल्मजानीत्यत्र गुल्मशब्देन वृक्षलतादीनामप्युपलक्षणं वेद्यं भवति ।

प्रत्याहरद्[1]गुरुसमीपमयं विनीतः[2] ॥७॥

स्नानं तटाकतटिनीषु[3] विधाय काले[4]

नित्याप्तकर्मनिवहांश्च[5] समाचरत्सः ।

आर्यप्रशस्तशुभधर्मपराः[6] परार्थाः[7]

पारत्रिकैहिकसुखं[8] सुलभं लभन्ते ॥८॥

नत्वा गुरुं पितरमेव[9] विभावयन् स्वं

शुश्रूषया नियतवेदतदङ्गजातम्[10] ।

---

१. प्रति + आ + अहरत् - हृञ्धातोर्लङि रूपम् । २. विनयेन युक्तस्सन् । ३. तटाके वा नद्यां वा अन्यत्र कस्मिंश्चित्सरसि वा स्नानं समासादितम् । तर्हि बहुवचनप्रयोगोऽनुपपन्न इति चेत् निरन्तरसञ्चारशीलस्य तस्य नियतप्रदेशे स्नानादिकं न घटते हि । अतः यदा यदा यत्र यत्र यद्यत् स्नानानुकूलं स्थलं तत्र तत्रेति तात्पर्यमनुसंधाय बहुवचनं प्रयुक्तम् । ४. विहितसमये । ५. सन्ध्यदिनित्यकर्माणीति यावत् । ६. आर्यैर्ये शुभधर्माः प्रशस्ततया विदिताः तेष्वासक्ताः । ७. परेभ्यः अर्थः (प्रयोजनम्) येषां ते इति बहुव्रीहिसमासः– अथवा परः श्रेष्ठः अर्थः उद्देशः लाभो वा येषां ते । ८. इहपरसुखमिति यावत् । ९. अत्र एवेत्यवधारणं अभेदप्रतिपत्यर्थम् । १०. नियतः क्लृप्तः यो वेदः तस्य यानि षडङ्गानि शिक्षा व्याकरणं छन्दः निरुक्तं ज्योतिषं कल्पश्चेति । जातमित्यनेन उपाङ्गानि उपवेदाश्च गृह्यन्ते ।

अध्यैष्ट[1] सार्थमपि[2] शास्त्रविचारतो[3]ऽयं
विद्या हि सार्थकगति[4]स्स्तुतशिष्यसक्ता[5] ॥९॥
भिक्षान्नतोऽर्थं[6] गुरुदत्तफलादितो वा
प्राण[7]स्थितिं दृढतरां[8] स चकार नूनम् ।
चिन्ता न का तमभजद्गृहिणो यथा सा[9]
विद्यारतस्य[10] न कदाप्यशनादितृष्णा ॥१०॥
ज्येष्ठास्सुतास्तु समयेषु[11] समूढ[12]भार्याः
केचित्सु[13]पुत्रनिवहा मुदिता बभूवुः ।
संसारिणां सुत[14]कलत्रविभूतियोगो

---

१. अधीत्युपसर्गपूर्वकइङ्धातोर्लुङात्मनेपदि रूपम् । २. सामान्यतः वेदाध्यायिनः अध्ययनमात्रं कुर्वन्ति-परं तदर्थं न विचारयन्ति अतः अर्थमपीत्यत्र अपिशब्दः समुच्चयद्योतकः । ३. शास्त्रविचारक्रमस्तु मीमांसाधिकरणोक्तः "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्ये"ति षड्विधलिङ्गबलात् अर्थनिर्धारणमिति मीमांसकाः वदन्ति खलु । तत्क्रमेणेति भावः । ४. सार्थिका गतिर्यस्यास्सा । ५. सच्छिष्यसङ्गता । ६. प्रातरध्ययनानन्तरम् । ७. प्राणधारणम् । ८. बलवत्तराम् "शरीरमाद्यं खलु धर्मसाधन"मिति कविपुङ्गवोक्तिरत्रादरणीया । ९. चिन्ता गृहस्थान् यथा भजति तथा तं ब्रह्मचारिणं नाभजदित्यन्वयः । १०. विद्याभ्यासनिरतस्य "विद्यातुराणां न सुखं न निद्रा" इत्यादिना अशनादावत्यासक्तिर्न भवतीति तात्पर्यम् । ११. भिन्नभिन्नकालेषु । १२. समूढाः (विवाहिताः) भार्याः यैस्ते । १३. सन्तानसमुदाययुक्ताः । १४. कलत्रसुतयोगः इति क्रमः अत्र क्रमो न विवक्षितः ।

मोदं सदा जनयते खलु नाकतुल्यम्[1] ॥११॥
सम्पादनं[2] न हि समं[3] न समश्च तोषं[4]-
स्तेषामभूदहरहः[5] कलहप्रियास्ते[6] ।
स्वार्थे सुखं कलयतो[7] न परार्थचिन्ता[8]
स्वातन्त्र्यहानिजनितः[9] कलहो गृहेषु ॥१२॥
सौभ्रात्रसंरतजनेषु[10] भवेत्क्वचिद्वा[11]
प्रीतिस्तथैकमतिरप्यथ[12] सा कथं वा ।
जायेत यातृषु[13] वधूषु[14] सुखार्थिनीषु[15]

---

१. नाके यो मोदः तत्समान इत्यर्थः । २. धनार्जनम् । ३. कश्चिच्छतरौप्यधनमार्जयति, अन्यः दश, परः एकम् अपरः न किञ्चिदिति तैः कृतं धनार्जनं न समम् । ४. अतः तोषः गृहे सौमनस्यमिति यावत् । न समः संसारसुखं धनायत्तं खलु तदभावे तदभावः । ५. प्रतिदिनम् । ६. कथं वा शतधनार्जनशक्तः अकिंचनेन भ्रात्रा सौहार्देन वर्तेत-अतः कलहस्स्वतस्सिद्धोऽविभक्तकुटुम्बे इत्याशयः । ७. अपेक्षमाणस्य-प्रायशो जनाः स्वार्थपराः । ८. परहितसाधने विमुखा एव । ९. तस्मात्सर्वेषां भ्रातृणामविभक्तसंसारे स्वातन्त्र्यं न घटते तदभावेन गृहेषु परस्परं कलहो जायत इति निर्गलितोऽर्थः । १०. समीचीनाश्च ते भ्रतरश्च सुभ्रातरः तेषां भावः सौभ्रात्रम्, तस्मिन् संरतेषु जनेषु । ११. केषुचिद्गृहेषु । १२. एका-अभिन्ना मतिः- एकमतिः ऐकमत्यमिति यावत् । कथञ्चिद्भवेत् सा काचित्का-तथापि । १३-१४. भ्रातृभार्यासु । १५. विवाहो नाम दम्पत्योस्सुखाधिवासः गृहेषु अतः वध्वः-नवोढाः श्वशुरगृहेषु स्वातन्त्र्यादिसुखमेवापेक्षन्ते ।

प्रायः कुटुम्ब[1]वलने वनिता निदान[2]म् ॥१३॥
द्रव्यन्तु पैतृक[3]मथाहरणेच्छव[4]स्ते
गत्वा निजं पितरमाहुरहो रह[5]स्यम् ।
त्वन्नो विभागमिह भोः कुरु सुप्रसन्न[6]ः
प्रत्येकमाशु समभ[7]क्तधना वसामः ॥१४॥
न्या[8]य्यं यदुक्तमचिरादहमादराद्वः
कुर्वे विभागमिद[9]मत्र चरस्थि[10]राद्यम् ।
आदाय यूयमर्थ[11] भोस्सुसु[12]खं धनं त-
त्प्रत्येकमत्र[13] वसत स्थि[14]रजीविनोऽलम्[15] ॥१५॥
एवं मनौ व[16]दति ते[17] तमुपेयुरारा[18]·

---

१. अविभक्तकुटुम्बचलने । अविभक्तसंसारं विभक्तं कर्तुमित्यभिप्रायः । २. मुख्यहेतुः । ३. पित्रार्जितम् । ४. विभागकरणेप्सवः । ५. गूढम् । ६. प्रीतमनाः । ७. समभाजनधीः प्रतिपुत्रनिष्ठा-तत्र निर्णयस्तु पित्रायत्तः । ८. न्यायादनपेतम् - युक्तमिति यावत् । ९. यद्गृहादिधनं पितापुत्रानुभववेद्यम् । तदिति इदमा निर्देशः । १०. धर्मशास्त्रानुसारेण धनं द्विविधम् - चरं स्थिरमिति ; तत्र गवाश्वाभरणाद्यं - चरम् ; भूगृहारामादिकं स्थिरम् ; आद्यशब्देन वर्षाशनमासाशनादिकम्, निधित्वेन यत्र कुत्र वा सुरक्षितस्थानेषु निहितमित्यादिधनस्यापि संग्रहः। ११. विभागानन्तरम्। १२. निर्बाधम् । १३. अस्मिन् गृहे ग्रामे, देशे वा । १४. स्थिरं जीवन्तीति स्थिरजीविनः- चिरंजिविन इति यावत्। १५. यथेष्टम्-पराधीनतां विनेत्यर्थः । १६. वदति सति । १७. ते पुत्राः । १८. समीपं "आराद्दूरसमीपयोः"इत्यमरः ।

दाहुर्विभाग[1]करणं न कनिष्ठपुत्रे[2] ।
विद्या हि तस्य वि[3]भवात्सुखदं[4] धनं स्या-
ज्ञानीहि नार्हति धने[5] स पित[6]र्विभागम् ॥१६॥
चक्रे तथा[7] मनुरहो[8] स्वधने विभागं
पुत्रं कनिष्ठमविचार्य[9] विभागयोग्यम्[10] ।
धर्म्यं[11] न वेद[12]मिति के प्रभवन्ति वक्तुं
कुर्याद्यथेष्ट[13]मिह यत्स हि धर्मवेत्ता[14] ॥१७॥
काले[15] गुरूप[16]सदनं स समाप्य[17] नाभा-
नेदिष्ट एष निलयं स्वपितुस्समायात् ।
भ्रातॄंस्तथा स्वपितरा[18]वभिवन्द्य हृष्टो[19]

---

१. विभागविधानम् । २. नाभानेदिष्टे-न संक्रामति, तस्य भागः न देय इत्याशयः । ३. विद्याप्रभावादिति यावत् । ४. सुखकरम् । ५. पैतृकधने । ६. हे पितः इति संबोधनम् । ७. तैर्यथापेक्षितं तथैवेत्यर्थः । ८. धर्मशास्त्रकारेषु प्रथमोऽपि विद्वानपि समानपुत्रवात्सल्योऽपि अन्योपदिष्टमन्याय्यं कृतवानिति सानुतापाश्चर्यद्योतकोऽयं निपातः । ९. विचारमकृत्वा । १०. यथेतरे पुत्राः विभागस्यार्हाः तथा कनिष्ठोऽपि विभागस्य (धनस्य भागं प्राप्तुम्) योग्य इति । ११. धर्मयुक्तम् । १२. वा-इदं-ईदृशविभागकरणम् । १३. इष्टानुसारम् । १४. धर्मस्य निर्णेता । १५. यथावसरे । १६. गुरुशुश्रूषापूर्वकं ब्रह्मचर्यमित्यर्थः । १७. पूरयित्वा । १८. मातरं पितरं ततः भ्रातॄनभिवन्द्येति तात्पर्यम् । १९. स्वगृहे स्वजनदर्शनेनैव हर्षपरवशोऽभूदिति तात्पर्यम् ।

देशान्तरागतनृणां सहजो हि हर्षः ॥१८॥
दृष्ट्वाथ तान् सकुशलं स्वगृहे जनानां
आतृनपृच्छदिह मे विहितोऽस्ति भागः ।
को वा स कस्य वशमेति निबोधयध्वं
प्रीतिं तनुध्वमयि मे समभागदानात् ॥१९॥
श्रुत्वा विभागहृदयं गृहमागतं तं
ज्येष्ठाश्च ते स्वपितरं दिदिशुः स्वहस्तैः ।
जानीहि निर्णयविदं पितरं विभागे
दातारमेव तमवेहि वयं न विद्मः ॥२०॥

---

१. विद्याभ्यासवाणिज्यव्यवहारक्षेत्रयात्रादिनिमित्तम्, देशान्तराणि अन्यदेशान् गत्वा, स्वकार्यसाधनान्तरं स्वदेशे स्वगृहमागतानां जनानां स्वजनवियोगजनितविषादापहरणेन समुत्कर्षः झडिति समुदेतीति तात्पर्यम् । २. स्वभावोऽयं व्यवहारः। ३. पितरौ भ्रातृंश्च । ४.अस्मद्गृहे । ५. को वा भागः अस्तीति प्रथमप्रश्नः । ६. अस्ति चेत्स कस्य वशेऽस्ति इदानीमिति द्वितीयः प्रश्नः । ७. मह्यमावेदयध्वम्-बुध्धातोः णिचि लोण्मध्यमपुरुषबहुवचनरूपम्। ८. तोषम् । ९. कुरुध्वम् । १०. अस्यापि समभागे गृधिरिति विचित्रा स्वभावगतिः । ११. विभागः हृदये यस्य तं-व्यधिकरणबहुव्रीहिः । १२. नाभानेदिष्टम् । १३. निर्देशं चक्रुः । १४. हस्तान् पितुरभिमुखं प्रसार्येति यावत् । १५. विभागस्य निर्णयकर्तारम् । १६. अस्माकं विभागं कृत्वा धनं येन दत्तं तं विभागस्य दातारम् । १७. वयं अस्य इयद्धनं अन्यस्य इयदिति यथा पित्रा निर्णीतम् तथा निर्णयं कर्तुं वा निर्णयानुसारेण तत्तद्विभक्तधनं प्रदातुं वा असमर्था इत्यभिप्रायः ।

सत्यं वदान्ति मम ते स्वपितास्ति दाता
धर्मज्ञ[2] एष तमहं स्वविभागहेतुम्[3] ।
पृच्छामि सत्यवचसं[4] स तनोति तृप्तं[5]
मामित्यबोधि[6] सुधियां[7] सुधियां[8] वरिष्ठः[9] ॥२१॥
संप्राप्य तं स्वपितरं तनयः कनिष्ठः
पप्रच्छ पैतृक[10]धनं वद भोः कियन्मे[11] ।
कुत्रास्ति तात्[12]पितर[13]हं तव पुत्रको[14]ऽलं
ज्येष्ठा यथा कलय मां च तथा विनीतम्[15] ॥२२॥
एवं जनैः[16] स्वपितरं ह्युप[17]धावतीह
प्रत्येक[18]मत्र सुविनिर्णय[19] नो[20] विभागम् ।
प्रत्यर्पय[21] त्वमयि[22] नो[23]ऽद्य[24] धनं कियद्वा[25]

---

१. भ्रातरः । २. धर्मं जानातीति धर्मज्ञः । ३. विभागस्य कारणभूतम् । ४. सत्यं वचः यस्य तम् । ५. मां विभागदानेन संतुष्टं करोतीति यावत् । ६. लुङि प्रथमपुरुषैकवचनम् । ७. सुविचारेणेति यावत् । ८. विदुषाम् । ९. श्रेष्ठः । १०. पितृसम्बन्धि । ११. मम कियद्धनं विभागसमये निर्णीतम् । १२. तदद्य कुत्रास्ति । १३. हे पितः । १४. अल्पार्थे अनुकंपनीयार्थे वा कप्रत्ययः । १५. तव विधेयम् । १६. लोकेऽपि इत्थमेव विभागार्हाः पुत्रादयः । १७. स्वपितुस्समीपं विभागमपेक्षमाणाः गच्छन्ति । १८. व्यष्ट्या न तु समष्ट्या । १९. सम्यगालोच्य निर्णयं कुरु । २०. अस्माकं । २१. देहि । २२. हे पितः । २३. अस्माकं । २४. इदानीं शीघ्रमेवेत्यर्थः । २५. यस्य यस्य यावद्यावद्धनं दातुमीहसे तत्र अस्माकं नो विचारः- कलहो वा-असमाधानं वा न भवतीति ध्वनिः ।

तिष्ठाम[1] भोस्तव[2] वचस्सु[3] वयं विधेयाः[4] ॥२३॥
जानामि[5] ते न वचसोऽत्र[6] किमुत्तरं स्या-
द्भ्रातृभ्य एव [7]विहितं हि धनं मदीयम् ।
दोषो[8] न मे भवति भो न च पक्षपातो[9]
मत्प्रेरणे[10] कलय भोस्तव भागधेयम्[11] ॥२४॥
विद्यैव ते धनमिति प्रतिपद्यते[12] हि
त्वद्भ्रातृभिस्तदपि मे सुविभाति[13] सत्यम् ।
वित्तस्य ये निगदितास्समुपप्लवास्ते[14]
विद्यां कदापि धनदां[15] किमुपस्पृशेयुः[16] ॥२५॥

---

१. तव वचनमेवानुसराम । २. भोः पितः । ३. वचने निर्णयवचने इति यावत् । ४. विनीतास्सन्तः- पितृविषये पुत्राणां विधेयत्वमेव तेषां पैतृकधनाधिगमाय विभागर्हत्वे निदानमिति ध्वनिः । ५. न जानामीत्यन्वयः । ६. प्रश्नस्य । ७. विभक्तमिति यावत् । ८. अपराधः । ९. त्वामनाहत्य त्वद्भ्रातर एव आहृता यदि तर्हि मत्पक्षे मत्प्रीतौ त एव पतन्ति वर्तन्त इति भवेत्पक्षपातः तथा न विद्धीत्यर्थः । १०. तव विभागकरणे मयि यत्प्रेरणमभूत्तत् तस्मिन् । ११. तव अदृष्टविशेष एव कारणमिति कलयेत्यर्थः । १२. सुष्ठु ज्ञायते तैः । १३. समीचीनतयाऽहं मन्ये । १४. बाधाः-चोरादिभिर्धनापहरणेच्छुभिः प्रकल्पिताः । १५. धनप्रदाम् । १६. किमुपस्पृशेयुरिति काक्वा नोपस्पृशेयुरेवेत्यर्थो लभ्यते । धनस्य या बाधाः ता विद्यायाः न भवन्तीति तात्पर्यम् ।

चित्ते कलङ्क[1]मयि ते जहि[2] पुत्र धैर्या[3]-
ज्जानीहि पैतृक[4]धनं भुवि कुत्सितं[5] ते ।
दिष्ट्या[6] भवेद्बहु[7]धनं तव विद्यया[8]त्तं
विद्या श्रियं कलयतीति हि वेदघोषः[9] ॥२६॥
स्याच्चेन्मति[10]र्धनगता कथयाम्युपायं[11]
तेनैव ते धनमहो सुकृतेन[12] भूयात्[13] ।
पुत्राऽऽरभन्त ननु तेऽङ्गिरस[14]स्समीपे

---

१. संशयम् । २. नाशय-त्यजेति तात्पर्यम् । हनहिंसागत्योरितिधातोर्लोटि मध्यमपुरुषैकवचनमिदं रूपम् । "तृष्णां छिन्धि भज क्षमां जहि मद" मित्यत्र महाकविना भर्तृहरिणा प्रयुक्तं च । ३. धैर्यमवष्टभ्येति यावत् । ४. मयार्जितं धनम् । ५. अल्पम्-अन्येनार्जितमिति न गौरवापादकमिति भावः । ६. दैवयोगेन । ७. विपुलधनप्राप्तिः । ८. विद्याप्रभावेण संपादितम्, सन्ति खलु बहवोऽत्र उपाया धनार्जनाय - चौर्येण, वंचनेन, स्त्रीद्वारा, शरीरश्रमेण, विद्यार्जनेनेति । तत्र अन्तिमोपाय एव श्रेष्ठः, धर्मानपेतत्वात् । ९. 'वाग्वै धिया वसुः' इति श्रुतिरेव तत्र प्रमाणम् । अस्य अर्थः वाक् सरस्वती धिया कर्मणा प्राप्यं वसु धनम् - धननिमित्तभूतेति यावत् । १०. अपेक्षा (प्रकरणार्थः) । ११. तत्साधनमार्गम् । १२. पुण्येन अथवा सम्यक् निर्वर्तितेन । तेन-उपायेन । १३. भूधातोः आशीरर्थे आशंसार्थे वा अशीर्लिङि प्रयोगः । १४. अङ्गिरसः कुलोद्भवाः केचिन्महर्षयः ।

स्वर्गप्रदं[1] सुखकरं[2] महदत्र[3] सत्रम् ॥२७॥
क्लिश्नन्ति[4] ते मुहुरहः[5] प्रतिषष्ठमाप्त्वा[6]
श्रान्तांस्समाप्तिमधुना ननु कर्तुकामाः[7] ।
संप्राप्य[8] तानृषिवरांस्तव मन्त्रशक्त्या[10]
पूर्णं[9] कुरु त्वमथ भोस्स्तुतसत्रमेषाम्[11][12] ॥२८॥
सत्राय तैर्निजधनं विहितं[13] सहस्रं
पुत्राय[14] ते ददति ते सकलं क्रियान्ते[15] ।
स्वर्गाय गन्तुमनसो[16] बहुमोदमाना[17]-
स्सर्गाय[18] ते हितसुखस्य भवेत्तदीयम्[19][20] ॥२९॥

---

१. स्वर्गप्राप्तिदायकम् । २. अतः सुखदम् । ३. दीर्घकालेन निर्वर्तितव्यम् । ४. क्लेशं प्राप्नुवन्ति । ५. पुनः पुनः । ६. प्रतिषष्ठदिनम्-षष्ठपर्यायेण संभूतम् । ७. कैर्मन्त्रैः सत्रं सम्पूर्णं भवेदित्यजानन्तः । ८. क्रतुसमाप्तौ बद्धादराः, तान् ऋषिवरान् विहितमार्गं प्रापय-समीचीनमार्गं तेषां प्रदिशेति तात्पर्यम् । ९. अधिगम्येति यावत् । १०. त्वत्संपादिताऽनवद्यमन्त्रप्रभावेणेत्यर्थः । ११. श्रुत्या प्रशंसितं यागविशेषम् । १२. बुद्धिस्थानाम् अङ्गिरसाम् । १३. संपादितम्-परिकॢप्तञ्च । १४. मम पुत्राय । १५. सत्रान्ते अङ्गिरोभिः प्रारब्धे सत्रे पूर्णे सतीति तात्पर्यम् । १६. "तुं काममनसोरपी"ति विधिना मकारस्य लोपः । १७. बहु प्रीताः-संतुष्टा इति यावत् । १८. सृष्टये-प्राप्तये इति यावत् । १९. नियतार्थबोधकलडर्थे विधिलिङ् । २०. तेषाम् ऋषीणां संबन्धीत्यर्थः ।

सत्यं पितुर्वचन[1]मित्यवगम्य[2] बुध्या
सत्यप्रियस्य[3] कुशलं[4] भवतीति मत्वा ।
सत्ये धियं सततमत्र विभा[5]वयन्स्वां[6]
सत्यप्रिय[7]स्सुमनसाऽनुससार बोध[8]म् ॥३०॥
स नाभानेदिष्टो विगत[9]धनलोभो विनय[10]वान्
प्रणम्य[11]यागात्सत्रं पितरमसकृद्[12]धर्मगतिदम्[13] ।
हितेच्छावान्[14]योऽमुं गुरुमनुसर[15]त्येव सुजनः[16]

---

१. वाक्यम् । २. अवगम्य-बुध्वेत्यर्थः । ३. सत्यं प्रियं यस्य तस्य-इदं पदं पितुरित्यस्य विशेषणम्। अथवा सत्यप्रियस्य(जनस्य)कुशलं भवतीति सामान्योक्तौ संबन्धद्योतकम् । ४. अभ्युदयः । ५. मया सत्रं गन्तव्यमिति निर्धारं कुर्वन्निति तात्पर्यम् । ६. स्वीयां बुद्धिं अनेन परकीयां धियमप्यवगन्तुमयं प्रभवतीति द्योतते । ७. पितृवत् पुत्रोऽपि सत्यप्रिय इति व्यङ्ग्यमर्यादया अयमेव पितुः अतिप्रिय इति ध्वन्यते । ८. उपदेशं - पितृवाक्यम् । ९. विगतः धने लोभः यस्य सः, अनेन पैतृकधने तावत् चिन्ता त्यक्ता-स्वविद्यया धनार्जने चिन्ता तु अस्त्येव तदर्थमेव सत्रदेशप्राप्त्युद्योगः । १०. विधेयः । ११. नत्वा । १२. पुनः पुनः प्रणम्येत्यस्य क्रियाविशेषणम् । १३. सत्रस्य विशेषणम्:-स्वर्गप्राप्तिसाधकमिति यावत् । १४. परार्थसाधक इत्यर्थः यतः मनुः परार्थसाधकः ततः तत्पुत्रः नाभानेदिष्टः तद्वाक्यमनुससारेति विशेषार्थेन लोकेऽपि जनः परार्थसाधकं जनं गुरुभावेनाऽनुसरति तदुक्तं श्रृणोति तदाज्ञातं करोतीति सामान्यार्थः समर्थितः । १५. गुरूपदिष्टं पालयति । १६. जनसमूहः ।

प्रतिष्ठा खद्योतादरुणचरणस्येव नियता ॥३१॥

इति श्री वेङ्कटरमणार्यरचिते काव्यसमुदये वैदिके नाभानेदिष्ठचरितकाव्ये विद्यावाप्तिप्रतिपादकः प्रथमस्सर्गः।

---

१. गौरवम् । २. सूर्यात् । ३. अत्रचरणशब्दः श्रेष्ठवाचकः गुरुचरणः पितृचरणः इत्यादिवत् । ४. निश्चिता । अत्र चरणशब्देन प्रतिष्ठाशब्देन च चरणस्य प्रतिष्ठा स्वाभाविको धर्मोऽपि सा सुकृतेन गुरुदेवतानुग्रहेण लभ्यते इति प्रथमो ध्वनिः। अरुणस्य अनूरुरित्यन्वर्थनाम-अनूरोऽरपि स्वस्वामिनः सूर्यस्य प्रसादात् चरणप्रतिष्ठा - चरणवतो या प्रतिष्ठा सा अचरणवतोऽरुणस्यापि भवतीति द्वितीयो ध्वनिः । तन्मुखात्सूर्यस्य माहात्म्यमिति तृतियो ध्वनिः । तद्वत् मनोर्माहात्म्यमिति चतुर्थो ध्वनिः । तत्स्थानीयगुरोरपि महात्म्यमिति पञ्चमो ध्वनिः । अत्र विकस्वरालङ्कारोऽप्यूहनीयः । अस्मिन् सर्गे विद्यारतिः- धनाशा-स्वजनद्रोहः– पितृवाक्यपरिपालनम् इत्यादयः प्रतिपादिताः । तत्र दुर्गुणाः परित्याज्याः- सुगुणा अङ्गीकरणीयाः इति सामान्यतो निर्देशः कृतः । अन्तिमपद्यं शिखरिणीवृत्तनिबद्धम् । तल्लक्षणम् "रसैरुद्रैश्छिन्ना यमनसभलागश्शिखरिणी" इति ।

इति श्री वेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके नाभानेदिष्टकाव्ये विद्यावाप्तिद्योतकप्रथमसर्गस्य कविना स्वेनैव रचिता गम्भीरपदार्थबोधिन्याख्या व्याख्या समाप्ता ।

---

# अथ द्वितीयस्सर्गः ।

---

हित्वा गेहं [1]स्वं ग्रामसी[2]मानमाप्त्वा
प्रातस्सन्ध्या[3]द्यं नित्यकर्मात्र कृत्वा ।
ज्ञत्वा वृ[4]द्धेभ्यो मार्गमुद्दिष्ट[5]देशं
नाभानेदिष्टो स[6]त्रदेशं जगाम ॥१॥

शाखा[7]मार्गाणामाश्रयस्था[8]ननाम:–

---

अस्मिन् सर्गे अन्तिमपद्यं विना तदितरपद्यानि वैश्वदेवीवृत्तनिबद्धानि । तल्लक्षणम् "पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ" इति । १. स्वं गेहं स्वगृहमित्यर्थः । २. ग्रामान्तदेशम् । ३. आद्यशब्देन ब्रह्मयज्ञऋषितर्पणादिकानि कर्माणि बोध्यानि । ४. वयोवृद्धेभ्यः– वयोवृद्धा हि स्वानुभवेन ज्ञातान्परितोऽवस्थितग्रामादिमार्गानितरेभ्यः सम्यगवबोधयितुं समर्थाः । ५. उद्दिष्टः देशः यस्मिन् (मार्गे) स इति बहुव्रीहिघटितपदं मार्गमित्यस्य विशेषणम् । ६. सत्रदेशं प्रति । ७. द्वित्रिऽचतुराः मार्गाः यत्र सम्मिलन्ति तत्स्थानात् दिशि दिशि ये मार्गाः प्रवर्तन्ते ते शाखामार्गाः तेषाम् । ८. तेभ्यः आश्रयस्थानानि - प्राप्यस्थानानि यानि तेषां नामानि अयं मार्गः इदं नगरं प्रापयति अस्य दूरं इयत्कोशः इयद्योजनमित्यादिनिर्देशाभावात् ।

न्यज्ञात्वा[1] सोऽयं तत्र तत्राऽऽप मोहम्[2] ।
सत्रं प्रस्थातुं मार्गचाराऽऽगतेभ्यो[3]
ज्ञात्वा मार्गं[4] तं तत्र चारं[5] स मेने[6] ॥२॥
स्वादून्या[7]म्रा[8]णि प्रीतियुक्तो[9] विचिक्ये[10]
मार्गे वृक्षेभ्यो भोजनायात्तुकामः[11] ।
कासारं[12] प्राप्य स्नानसन्ध्यां स कृत्वा
तस्मिन्[14] मध्याह्ने ह्याम्र[15]भोजी बभूव ॥३॥
श्रान्तो[16] विश्रान्तिं[17] तापतप्तो[18] नितान्तं

---

१. अविज्ञाय । २. कस्यां दिशि प्रस्थातव्यमिति निश्चया-भावात् भ्रान्तिजन्यो मोहः- कार्यस्तब्धता । ३. चारः चरणं मार्गे चारः (मार्गसंचरणम्) तद्वशात् तत्रागतेभ्यो जनेभ्यस्सकाशात् । ४. स्वोद्दिष्टमार्गम् । ५. संचारं संचरणमिति यावत् । ६. विदितवान् । ७. मधुराणि । ८. रसालफलानि । ९. आकृष्टस्य हिताय यदाकर्षणं करोति तस्मिन् आकृष्टस्य प्रीतिः निसर्गादुत्पद्यते इति चित्तवृत्तितत्वमत्र विभावनीयम् । १०. चिञ्धातोः लिडात्मनेपदीदं रूपम् । ११. अत्तुं-भोक्तुं कामः-अपेक्षा अदनकाम एव (भोजनार्थम्) आम्रफलावचयने हेतुः । १२. कंचिज्जलप्रदेशमिति यावत् । १३. स्नानसन्ध्याशब्दाभ्यां तदितरयोग्यकर्मणामप्युपलक्षणम् । १४. यद्दिनस्य प्रातः स प्रयाणमारेभे तद्दिनस्येति सूचनायेदं सर्वनाम-पदम् । १५. फलाहारेणैव प्राणधारणं कृतवानित्यर्थः । १६. मार्ग-संचारेण जनितायासयुक्तः । १७. विगता श्रान्तिः तां आयास-परिहारमिति यावत् । १८. आतपपीडितः ।

श्रित्वाधश्[1]छायां मार्गवृक्षस्य धीमान् ।
अस्वाप्सीत्[2] किंचित्तस्य भा[3]नं न किंचि-
न्निद्रा भूतानां कल्पिता श्रा[4]न्तिशान्त्यै ॥४॥
स्वापादुत्थाय प्रस्थितः प्रा[5]न्तदेशं
सायं प्राप्याऽयं म[6]ण्डपे बाह्य[7]देशे ।
स्थित्वा सत्रो[8]त्थं होमधू[9]मं च दृष्ट्वा
तद्ग[10]न्धव्याप्तं वायुमाप्यं[11] निषेवे[12] ॥५॥
प्रातः शु[13]द्धोऽसौ सत्रभूमिं प्रविश्य
स्निग्धा[14]र्थान्पश्यंस्तत्क्षणादास मुग्धः[15] ।

---

१. वृक्षस्याधः प्रसृतां छायामिति विवेकः । २. सुष्वाप किंचित् - कंचित्कालम् । ३. स्वापे कस्यापि वस्तुनः भानं ज्ञानं नास्ति खलु (मनोलयहेतोः) । ४. श्रान्तिपरिहाराय । ५. स्वग्राम-समीपस्थदेशम् उद्दिष्टदेशमित्यर्थः । ६. अनाथानां भिक्षुकादीनां सहायार्थं धर्मपरैः कल्पिते कस्मिंश्चिन्निवासस्थाने । ७. तद्ग्रामस्य बाह्यप्रदेशे । ८. सत्रशालास्थेभ्योऽग्निभ्यो जनितम् । ९. होमार्थम् अग्नौ प्रक्षिप्तेभ्य आज्यादिपदार्थेभ्यः द्रवधूमक्रमेण परिणतं धूमम् । १०. तद्धूमसंयुक्तसौरभसमवेतमिति यावत् । ११. आह्लादकम् । १२. सेवितवान् आघ्रातवानित्यर्थः । १३. स्नानादिना । १४. श्रेष्ठान्नृत्विजः अदृष्टपूर्वान् पदार्थान् अद्भुतां सत्रमण्डपरचनां दृष्ट्वा एतादृशपदार्थदर्शने यः कुतूहलविशेषः स एव तेषु स्नेहः तद्युक्तानीति यावत् । १५. मोहयुक्तः अत्र मोहस्तु अद्भुतवस्तुदर्शनजातः ।

सद्भावै[1]श्चित्ते जायते चित्रवृत्ति[2]-
स्तज्जाता[3]नन्दान्मुग्धभावः[4] प्रसिद्धः ॥६॥
नत्वा तत्रर्षी[5]न् भक्तिभावेन सर्वा-
नृत्विक्कार्ये[6]ऽस्मिन् स्वस्य भावं[7] व्यतानीत्[8] ।
सर्वे सत्राप्तां[9]श्चारितां[10]र्थ्ये सुदक्षं
दैवादा[11]यातं चारिणं[12] मेनिरे तम् ॥६॥
पुत्रः[13] कस्यास्से स्वस्य कस्यात्सुहृद्भ्योः-
कस्माद्देशात्त्वं सत्र[13]मत्राऽऽगतोऽसि ।

---

१. शुद्धे चित्ते ये ये सद्भावाः सत्वगुणोत्कर्षजनिता इति यावत् । २. तदद्भुतपदार्थसंदर्शने चित्तवृत्तिः विचित्रा अनेकप्रकारा भवति । ३. तया अनुभवैकवेद्यः आनन्दो भवति तमानन्दं वक्तुमशक्यत्वात् । ४. अयं मुग्धो बभूव - एवं चित्तवृत्ति-परिणामप्रणालिका मुग्धभावस्य हेतुरिति तत्वनिर्देशः । ५. सत्रस्थान् । ६. षष्ठेऽह्नि क्रियमाणे अनन्यसाधारणे ऋत्विक्कर्मणि । ७. अहमिदं सान्तरायं षडहसंबन्धि कर्म निरन्तरायं समाप्तिं करोमीत्यभिप्रायम् । ८. प्रकाशितवान् । ९. सत्रे नियुक्ता ऋत्विग्यजमानादयः । १०. चरितः आचरितः । अर्थः यागरूपः यस्मिन्तत् तस्य भावः चारितार्थ्यम् तस्मिन् यज्ञसमवाप्तिकर्मणीतिभावः । ११. हठात्-अनिरीक्षितं यथा तथेत्यर्थः । १२. चारः-संचारः अस्यास्तीति चारी तम् संचारेण तत्रागतमिति प्रकरणार्थः । १३. आस्से-आसाथे-आध्वे इति आस धातोः लडात्मनेपदि मध्यम पुरुषरूपाणि ।

किं ते वैदग्ध्यं[1] ब्रूहि सत्यं सदात्म-[2]
न्नित्यामन्त्र्यामुं[3] जाततोषा[4] ह्यपृच्छन् ॥७॥
जानीतार्या[5] मां[6] मानवं[7] ब्रह्मपौत्रं[8]
मित्रं सर्वं[9] मे प्रान्तदेशं मदीयम्[10] ।
सिद्धिं[11] मन्त्रेषु[12] प्लुष्टसर्वान्तरायां
नाभानेदिष्टं स्वेष्टकर्मप्रतिष्ठम्[13] ॥८॥

---

१४. सत्रं प्रति।

१. पांडित्यम्। २. "आकारेणैव सुदृशस्तर्कयन्ति परेंगित-" मिति लौकिकोक्त्या मुखवीक्षणमात्रेण ज्ञात्वा सदात्मन् इति संबोधनं कृतम् । सन् आत्मा यस्य तस्य संबुद्धिः । ३. संबोधनेन स्वाभिमुखं कृत्वा। ४. अयमिदं सत्रं संपूर्णं कृत्वा अस्मान् कृतिनः करिष्यतीति ज्ञानेन जातः तोषः-येषां ते । ५. वित्त-ज्ञाधातोः लोण्मध्यमपुरुष-बहुवचनरूपम् । ६. पूज्या इति संबोधनम् । ७. मनोः पुत्रम्-इदं पुत्रः कस्येत्यस्योत्तरम् । ८. मनुः ब्रह्मणः पुत्रः अतोऽयं ब्रह्मणः पौत्रः तम्। ९. सर्वे जनाः मे मित्रस्थानीया इति जानीतेति स्वस्य कस्स्यात्सुहृन्दोः इत्यस्योत्तरम् । १०. प्रान्तदेशं अस्य सन्निकृष्ट-देशम्, मदीयम्-मम देशं जानीतेति तृतीयप्रश्नस्योत्तरम्। ११. मन्त्र-सिद्धिमिति यावत्, जानीतेति किं ते वैदग्ध्यमित्यस्योत्तरम्। १२. प्लुष्टाः-दग्धाः (परिहृता इति यावत्) सर्वे अन्तरायाः यस्यास्तामिति सिद्धिमित्यस्य विशेषणम्-मम मन्त्रसिद्धिः सुर्वबाधोपशान्तिदायिनीति फलितार्थः। १३. स्वेनाङ्गीकृतेषु कर्मसु लब्धप्रतिष्ठमिति च जानीतेति स्वनामगुणसूचकमिदमधिकं कथनम् ।

यूयं षष्ठेऽहन्या[1]प्तकर्म[2]प्रपूर्णा-
स्स्वर्गं यास्यन्तो[3] दत्त मे दक्षिणां वः[4] ।
तां साहस्राप्तौं[5] स्वर्गयोगो मया[6] वो[7]
युष्माकं[8] मे भोस्स्वास्थ्य[10]योगः प्रभावात्[11] ॥९॥

श्रुत्वेदं[12] सर्वे हृष्ट[13]चित्ता जगुस्तं[14]
सत्रेऽस्मिन्प्रीत्या[15] स्वीकृतस्त्वं विधिज्ञः[16] ।
तत्सत्रान्ते ते दक्षिणा[17] दीयते[18] भोः
षष्ठेऽहन्या[19]त्तं कर्म तत्प्रारभस्व[20] ॥१०॥

---

१. षष्ठदिनकर्मसंबन्धिनः । २. अङ्गीकृतकर्मणः समाप्तिं कृतवन्तः सन्तः । ३. प्रयाणात्पूर्वमिति तात्पर्यम् । ४. युष्माभिरुपार्जितामिति भावः । ५. सहस्रसंख्यामिताम् । ६. मया संपादितः । ७. युष्माकम् । ८. अस्य पदस्य प्रभावादित्यनेन सम्बन्धः । ९. मम । १०. मनस्समाधानमिति यावत् । ११. धनप्रभावादिति प्रकरणार्थः । मदायत्ता युष्माकं स्वर्गप्राप्तिः युष्मदायत्ता ममार्थप्राप्तिरित्याकूतम् । १२. नाभानेदिष्टेनोक्तम् । १३. सन्तुष्टांतरङ्गाः । १४. ऊचिरे-गै शब्दे इति धातोः लिटि रूपम् । १५. प्रेम्णा । १६. यागविधानज्ञः- वेदविदित्यर्थोऽप्युपलभ्यते - यतः "अहरहस्सन्ध्यामुपासीते"त्यादिविधिबहुलाः खलु वेदाः । १७. गोसहस्ररूपा । १८. दक्षिणादानरूपकर्मप्राधान्यादत्र कर्मणि प्रयोगः । १९. षडहकर्तव्यं यत् । २०. रभधातोः लोडात्मनेपदमध्यमपुरुषैकवचनम् ।

अन्तः[1] शुद्धोऽयं बाह्यशुद्धिं[2] विधाय[3]
क्षिप्रं तद्योग्यैस्[4]सूक्तमन्त्रैः[5] क्रमेण ।
सत्रं सम्पूर्णं[6] तद्यथोक्तं[6] समाप्य[7]
स्वर्गप्राप्तिर्या[8] साधिता सा[9]ऽऽङ्गिरोभ्यः[10] ॥११॥
स्वर्यान्तो[11]ऽदुस्ते ऋत्विजे[12] गोसहस्रं[13]
तल्लब्ध्वा तस्मिन्यातुकामे[14] क्षणाद्धा[15] ।

---

१. शमदमादिसाधनसंपन्नः । २. स्नानादिकम् । ३. कृत्वा । ४. षडहकर्म समनुष्ठातुं परिक्लृप्तैः । ५. मंत्राणां सामान्येन ऋगिति व्यपदेशः ऋचां समूहस्सूक्तम् । अतः सूक्तमंत्रैरित्यनेन सक्तस्थाभिः ऋग्भिरिति तात्पर्यम् । सूक्तमन्त्रास्तु "इदमित्थारौद्रं गूतवचः" (ऋ अ ८-अ)। "ये यज्ञेन दक्षिणया समाः" (ऋ अ ६-अ-२ सू।) इत्यादयः । ६. तत् यथोक्तमिति पदच्छेदः । यथोक्तं-विध्युक्तमिति यावत् । ७. सम्पूर्णं कृत्वेत्यर्थः । अत्र सम्पूर्णं समाप्येत्याम्रेडितं श्रूयते, नायं प्रयोगोऽत्युक्त इति भाव्यते, परन्तु यथोक्तं सम्पूर्णं सत्रं समाप्ये (कृत्वे)त्यन्वयेन न दोषलेशस्यापि शङ्का । ८. सत्रनिर्वर्तनेन श्रुत्युक्ता स्वर्गप्राप्तिर्या । ९. स्वर्गप्राप्तिः । १०, अङ्गिरसः कुलोद्भवेभ्य ऋषिभ्यः । ११. स्वर्गं गच्छन्तोऽङ्गिरसः १२. नाभानेदिष्टाय । १३. गोसहस्ररूपां दक्षिणामित्यर्थः । स चार्थः सहस्रपदलिङ्गेन ज्ञायत इति मीमांसासमयः । १४. स्वदेशं प्रति गन्तुकामे । १५. हेति विषादसूचकम्।

संप्राप्तो विघ्नस्तद्धनं तेन[1] नष्टं[2]
साधूनां नित्या[3] सांतराया[4] सुखाप्तिः[5] ॥१२॥
कश्चिद्धा[6] भूतो[7] भूत[8] एवाविरासी-[9]
त्कालो वा[10] रूपे कालवस्त्रावृतोऽयम्[11] ।
मृत्युर्वा[12] तस्य स्वस्य[13] मृत्युर्न कश्चि-[14]
त्तं दृष्ट्वा विप्रो[15] भीतभीतो[16] बभूव ॥१३॥

---

१. विघ्नेन विघ्नभूतरुद्रेणेति तात्पर्यम् । २. अपहृतम् । ३.नियता, प्रायः ४. विघ्नयुक्ता । ५. सुखस्य प्राप्तिः। ६. हेति भयद्योतको निपातः। ७. देवयोनिविशेष इति वृद्धसमाख्यानं-रुद्र इति प्रकरणार्थः । ८. भवतीति भूतः सत्पदार्थः-परमेश्वर इति यावत् । रुद्रस्तु परमेश्वररूपः तस्य स्थितेः त्रिकालाबाधितत्वात् भूत एवेति प्रयोगः, अथवा कश्चिद्भूतः- कश्चिन्मानुषाकृतिः प्राणी, भूत एव भूत इव-भयोत्पादकप्राणिविशेष इवेत्यर्थः । अस्मिन्नर्थे "एव"कारः "इवा"र्थे बोध्यम् । ९. अविर्बभूव-परमेश्वरः व्यापकरूपेण सर्वत्र सर्वदा स्थितोऽपि कार्यवशात् यत्किंचिद्रूपं समश्रित्य पुरः स्थितवानिति वेदान्तसमयोऽप्यत्र सिध्यतीत्युन्नेयम् ।१०. यमो वेति स्थूलदृष्ट्या द्योत्यते, वस्तुतस्तु काल एवायं भूतः-महाकाल इति हीश्वरस्य प्रतिपदम् । ११. नीलाम्बरधारि । अनेनास्य भयजनकत्वं सूच्यते । १२. मृत्युदेवता वा । १३. स्वस्येति यस्येत्यर्थे। १४. मृत्योरप्ययंमृत्युः "मृत्युर्यस्योपसेचनम्" इति श्रुतिश्च। १५. ब्राह्मणः ब्राह्मणस्य क्षत्रियस्येव धैर्यं नास्तीति ध्वनिः । १६. अतिशयार्थे द्विरुक्तिः । अत्यन्तभयग्रस्त इत्यर्थः ।

रुद्रोऽहं भीमो[2] याहि[3] हित्वा धनं मे[4]
चोरो[5] मा भूस्त्वं चोर[6]कृत्येन बन्धः[7] ।
काऽऽ[8]शान्यं[9]स्वे ते ब्रूहि मे ब्राह्मणस्त्वं
प्रज्ञा[10] स्याच्चेत्ते वेत्सि विद्वन्स्वकृ[11]त्यम् ॥१४॥
श्रुत्वेदं रौद्रं[12] धैर्यमालम्ब्य सोऽयं
तं वीक्ष्यो[13]वाचस्निग्ध[14]भावेन देवम् ।
भक्तानां त्वं भोः प्राणदा[15]ता दयावान्
मल्लब्धं[16] यत्तद्ध[17]र्तुकामः कथं[18] त्वम् ॥१५॥

---

१. अहं नाम्ना रुद्रः । २. गुणेन भीमः भयङ्कर इति यावत् । ३. स्वगृहं प्रतिगच्छ । ४. मदीयधनमित्यर्थः । ५. तस्करः धनापहारक इति यावत् । ६. चौर्येण । ७. राजाज्ञया निगडबंधो भवति । ८. का वा ते तृष्णा । ९. परद्रव्ये । १०. या काचिद्बुद्धिस्तवास्ति चेत् । ११. स्वेन कृतं वा कर्तव्यं वा कार्यमिति भावः । बुद्धिमान्स्वकर्तव्यं सम्यग्जानातीति तात्पर्यम् । १२. रुद्रस्य वचनं भयदायकं वचनं वा । १३. दृष्ट्वा-नेत्रे उन्मील्य वस्त्वभिमुखदर्शनं हि वीक्षणम् । तच्च धैर्यवत एव संपद्यते । अतः वीक्षणे हेतुः धैर्यम् । तत् "धैर्यमालम्ब्य" इति पदेन सूचितम् । १४. स्नेहेनेति यावत् - अत्र भक्तिपर्यायः स्निग्धभावः । अयं उत्तरत्र देवस्वभावनिर्देशावसरे प्रकाशितः । १५. इदं मार्कण्डेयप्राणरक्षणनिर्देशमभिसंधायोक्तम् । १६. मयाऽस्मिन् सत्रकर्मणि दक्षिणारूपेणार्जितम् । १७. अपहर्तुमनाः । १८. कथमितिप्रश्नमर्यादया धनापहरणनिषेधाभिसन्धिस्सूचिता ।

त्वल्लब्धं[1] किं भो " आम्[2], कथम्[3] ? मेऽत्र[4] दत्तं,
कैः[5] ? सत्राप्तैस्ते[6] कुत्र[7] ? नाके[8], कदा[9] ? ऽऽद्य[10] ।
अद्याऽहं[11] स्वामी त्यक्तवित्तस्य[12] सत्रे"
पूर्वं ते ऽध्यक्षाः[13] पूर्वदत्तं[14] न तत्ते ॥१६॥
मुग्धोऽभूद्[15] द्विप्रः प्रश्नभङ्गोत्तराभ्यां[16]

---

अस्मिन्श्लोके रुद्रनाभानेदिष्टयोः प्रश्नोत्तरमुखेन सत्रसंबन्धि-धनस्य स्वत्वं कस्येति विचार्यते । तद्यथा - १. त्वया तद्धनं लब्धं किं भो इति रुद्रस्य प्रश्नः । २. आमित्यङ्गीकारार्थे निपातः- तथैवेति नाभानेदिष्टस्योत्तरम् - एवमुत्तरत्र । ३. कथं त्वया लब्धम् । ४. अत्र सत्रे मह्यं प्रदत्तम् । ५. कैस्ते प्रदत्तम् । ६. सत्रे ये व्यापृताःतैर्यजमानादिभिः मे प्रदत्तम् । ७. ते यजमानादयः कुत्र सन्ति ? । ८. ते स्वर्गे निवसन्ति । ९. तैस्ते कदा दत्तमिदं धनम् । १०. अद्यैव - अचिरादेव दत्तमित्यभिसंधिः । ११. अद्याहमेव तस्य स्वामी । १२. सत्रान्ते यद्यत्त्यक्तं तत्सर्वस्यापि अहमेव स्वामी । तन्मदीयमिदं धनम्, न तु त्वदीयम् ।१३. स्वर्गप्रयाणात्पूर्वं ते यजमानादयः एतद्धनस्य अध्यक्षाः- नियामका आसन्, अतःतदीयं द्रव्यं मे दत्तं तन्ममैतद्धनमिति नाभाने-दिष्टस्य वचनम् । १४. सत्यं स्वर्गप्रयाणात्पूर्वं ते एतद्धनाध्यक्षाः-परन्तु तदा तैर्न दत्तमिदं ते। यदि तदा दत्तम् तर्हि त्वदीयम् । यतोऽद्य स्वर्गं यान्त एव दत्तवन्तः तत इदं मदीयमिति रुद्रदेवोक्तिः । १५. स्तब्धः मूक इति यावत् । १६. रुद्रप्रश्नाकूतेन स्वकृतप्रश्नरूपवाक्यस्य रुद्रेणोक्तोत्तरेण च ।

स्निग्धो[1] भूत्वाऽसिन्रुद्रदेवस्तमूचे ।
याहि[2] ब्रूहि[3] त्वं यः पिता[4] ते तमेत-
द्ध्यावां[5] तिष्ठावस्तस्य[6] वाक्ये प्रमाणे[7] ॥१७॥
सन्तुष्टो[8] विप्रो रुद्रवाक्येन तेन
प्रत्यायातो[9] द्राक्[10] तातपादं[11] स भेजे ।
दृष्ट्वाऽमुं[12] पुत्रं तस्य हर्षस्समासी-[13]
त्कीर्त्याऽऽत्ते[14] पुत्रे कस्य[15] हर्षः पितुर्नो[16] ॥१८॥
सत्रे यद्वृत्तं तत्समस्तं स्वपित्रे[17]
विज्ञाप्य[18]ऽऽहार्यं[19] स्वस्य वित्तस्य हानिम्[20] ।

---

१. स्नेहयुक्तः-दयावान्भूत्वा । २. पितृसमीपं त्वं गच्छ। ३. अत्र यद्यत्संवृत्तं तस्मै तत्सर्वं ब्रूहि-आवेदयेत्यर्थः । ४. यःत्वत्पालनकर्ता पिता तम्-मनुमित्याकूतम् । धर्मवेत्ता कदाप्यनृतं न वदतीत्यभिसंध्या तस्य पितृसमीपगमने प्रेरणं कृतमित्यवधेयम् । ५. एतत् हि आवामिति पदच्छेदः । ६. तेन यथोच्यते तथाऽऽवां अनुवर्तावहे इत्यभिप्रायः । कुतः । ७. तस्य वाक्यमावयोः प्रमाणभूतम् । ८. मोदभरितः । ९. प्रत्यागतः । १०. तत्क्षणं-त्वरितमिति यावत् । ११. पितृचरणम् । १२. कनिष्ठपुत्रम् । १३. कृतकार्यस्य पुत्रस्य दर्शनेन मनोः हर्षोदयः स्वाभाविकः । १४. विदेशे संप्राप्तयशसि पुत्रे स्वदेशं समागते तद्देशस्थितानां जनानां हर्षो भवति । १५. पितुस्तु प्रहर्षः भवत्येव । १६. निषेधमुखप्रश्नेन वस्तुस्थित्यवधारणं व्यज्यते । १७. मनवे । १८. आवेद्य । १९. अकथयत् - भूतार्थे वर्तमानप्रयोगः। २०. नाशप्रकारम् ।

विज्ञातुं[1] वृत्तं[2] निश्चितार्थं[3] विशेषा[4]–
त्पुत्रं प्राहायं तत्पिता[5] धर्मवेत्ता ॥१९॥

वित्तं दत्तं[6] किं ? दत्तमार्या[7]ऽस्तु[8] तत्किं[9] ?
गोसाहस्रम्[10] कैः[11] ? अङ्गिरोभिः[12] कदा[13] भोः ?
सत्रान्ते[14] तर्हि स्वं न[15] ते ? कस्य[16] ? [17]रौद्रं

१. वेत्तुम् । २. वृत्तान्तम् । ३. निश्चिताः अर्थाः कार्यरूपाः यस्य तत् । यथा प्रवृत्तवृत्तमिति यावत् । ४. विशेषेण ज्ञातुं - विशेषादिति पदं विज्ञातुमिति पदस्य विशेषणभूतम् - सविशेषमित्यभिप्रायः । ५. अस्य पिता मनुः । ६. मदुक्तप्रकारेण दक्षिणारूपं धनं ते दत्तं किमिति पितुर्वचनम् । ७. हे आर्य–पूज्यपाद पितः तथैव दत्तमिति पुत्रस्य प्रतिवचनम् । ८. भवतु । ९. तद्धनं किंरूपमिति प्रश्नः । १०. सहस्रसंख्याकगोरूपं धनमित्युत्तरम् । ११. यजमानादिभिर्दत्तं वा अन्यैः कैश्चिद्दत्तं वेति संशयपरिहाराय कैस्ते दत्तमिति पुनः प्रश्नः । १२. यजमानभूताङ्गिरोभिरेव मे दक्षिणारूपं धनं दत्तमित्युत्तरम् । १३. सत्येवं तद्धनस्य हानेः कारणं किमित्यवधारयितुं कदेत्यन्यः प्रश्नः सत्रान्ते वा, सत्रसमाप्तेः पूर्वं वा दत्तमित्याकूतं प्रश्नकृतः । १४. सत्रे समाप्ते त्वद्धनं मे दत्तमिति पुत्रस्य प्रतिवचनम् । १५. तथा सति तद्धनं त्वदीयं न भवतीति मनोर्निगुर्धा वचनम् । १६. तर्हि तद्धनं कस्येति संभ्रातस्य पुत्रस्य प्रश्नः । १७. तद्धनं रुद्रस्वामिकमिति श्रुत्युपदिष्टसत्यप्रतिवचनं मनोः ।

तेषां नो[1] ब्रूहि स्वं न तेषां ब्रवीमि ॥२०॥
मा भैषीः[3] पुत्र त्वं तमेवानुगच्छ
स्वांतं ते शुद्धं स्यादयं ते प्रसन्नः ।
दास्यंत्येवेदं गोसहस्रं स भूयो
देवानां चित्त भक्तिभावप्रयुक्तम् ॥२१॥
सत्रान्ते त्यक्तो योऽस्त्ययं रुद्रभागो
यस्माद्यज्ञानां यः पतिर्यः पशूनाम् ।
तस्य त्वं साक्षान्मूर्तिमावीक्ष्य धन्यो

---

१. तथापि संशयचित्तः पुत्रः तद्धनं तेषामङ्गिरसां न भवति वेति पुनः पृच्छति । अत्र नञर्थे नोशब्दः । २. तद्धनं तेषां न भवतीति मनोः निश्चप्रचा प्रत्युक्तिः । ३. तच्छ्रुत्वा चिंताक्रान्तं स्वपुत्रं समाधातुं मा भैषीः ते भयं मास्त्वित्याद्युपशमनबोधः । ४. रुद्रमेव । ५. अंतःकरणम् । ६. कामक्रोधलोभादिभिरनाविष्टम् । स्नत निर्मलं भूयादित्याशीः-तथा चेत् । ७. रुद्रः । ८. त्वय्यनुग्रहयुक्तः । ९. अपहृतं धनं ते दास्यत्येवेति स्वस्य निश्चयसूचनम् । १०. पुनः । ११. हृदयम् । १२. भक्तानां शुद्धेन भावेन युक्तं-भक्त्यायत्तमिति यावत्, यत्र शुद्धो भावः तत्र देवतानुग्रहः इति तात्पर्यम् । १३. सत्रान्ते-सत्रप्रदेशे यो यः पदार्थस्त्यक्तो भवति । १४. स सर्वोऽपि । १५. रुद्रस्वामिकः । १६. यतः स रुद्रदेवः परमेश्वरः । १७. यज्ञानां पतिः- पालकः । १८. स एव सर्वभूतानां च पालकः । १९. तादृशपरमेश्वरमूर्तिम् । २०. साक्षाद्वीक्ष्य-संदृश्येत्यर्थः । २१. कृती असीत्यध्याहारः ।

धन्यो लोकेऽसौ[1] यस्य[2] देवः प्रसन्नः ॥२२॥
ज्ञात्वा तत्त्वं[3] रुद्रमायाच्छरण्यं[4]
तद्गोसाहस्रं ज्ञातमत्र[5] त्वदीयम्[6] ।
तस्मान्मामज्ञं[7] पाहि[8] भो मेऽपराधं[9]
सर्वं सर्वज्ञ[10] त्वं दयालुः[11] क्षमस्व ॥२३॥
एवं शंसन्तं[12] वीक्ष्य कारुण्यदृष्ट्या[13]
तद्गोसाहस्रं सोऽ[14]ददाद्भूरि[15] तस्मै ।
सत्येन[16] त्वं मामागतो[17] यद्ब्रवीषि

---

१. अयं पुरुषः । २. यस्य देवः येन केन वा प्रकारेण प्रसन्नो भवति-"किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने" इत्याद्युक्तिरत्रानुसंधेया । ३. एवंविधं परमेश्वरतत्वम् । ४. रक्षकत्वेनाश्रयभूतम् । ५. मम पितृमुखान्मयाऽद्य विदितम् । ६. तव धनमेव । ७. एतत्तत्वानभिज्ञम् । ८. पालय । ९. एतद्धनं मल्लब्धमिति त्वया सह विवादेन मया कृतं दोषम् । १०. हे सर्वज्ञेति संबोधनम्-अहमज्ञः त्वं सर्वज्ञ इति ज्ञाने वैषम्यद्योतनाय । ११. अज्ञेषु अपराधिषु च दयालुस्त्वमिति आर्तोक्तिरत्र प्रकरणोचिता हृदयंगमेति बोध्यम् । १२. स्तुतिं कुर्वन्तं नाभानेदिष्टम् । १३. करुणार्द्रदृष्ट्या । १४. परमेश्वररूपो रुद्रदेवः । १५. भूरि च अधिकं च न केवलं तद्गोसस्रं तस्मै ददौ किं तु अन्यदप्युत्कृष्टधनं ददौ-किं तद्धनमिति अत्र चतुर्थपादे विशदयति । १६. सत्यवचनेन-यथा त्वत्पिता त्वामभिहितवान् तथैव सत्यवचसेति तात्पर्यम् । १७. मां प्रत्यागतः सन् वदसि ।

प्रीतो[1] दास्ये ते स्थैर्यधैर्यादि[2] वित्तम् ॥२४॥
सत्ये[3] तिष्ठामि प्रत्यहं[4] प्राणिवर्गे[5]
सत्येनाऽहं[6] स्यां मोदमानो[7] जनानाम् ।
सत्यादन्यत्किं[8] सौख्यहेतुः[9] प्रजानां[10]
सत्यं सर्वत्र[11] ब्रूत यूयं[12] सुता[13] मे ॥२५॥
एवमाह[14] भुवि वेदघोषत[15]—
स्सत्यवादिचरितं[16] मनोहरम्[17] ।

---

१. तेन कारणेन अहं सुप्रीतः ते दास्ये-किम् । २. चित्तक्षोभापादकसन्निवेशे चित्तस्थैर्यम् । आपत्संप्राप्तौ धैर्यम् - आदिशब्देन शान्त्यादिसर्वसुगुणा गृह्यन्ते - एते सुगुणा एव वित्तम् - श्रेष्ठं धनम्-एतद्भूरिशब्देन द्वितीयपादे संगृहीतम् । ३. सत्यभावे सत्यवचने सत्यकर्मणि च - सत्यपालनं मम सेवेत्याकूतम् । ४. अनवरतम् । ५. भूतेषु - इदं स्थितिक्रियायाः अधिकरणम् । ६. प्राणिभिः प्रदर्शितेन सत्यधर्मेणेति भावः । ७. सुप्रीतः । ८. सत्यादपेतं लोके यत्किंचित् । ९. सुखप्राप्तये कारणम् । १०. जनानाम् । ११. सत्यवचनमेव सर्वेषु दुर्घटसन्निवेशेषु । १२. यूयमिति अनिर्धारणे प्रयोगः सर्वजनबोधकः । १३. यथाऽहं जगत्पिता तथा जगदन्तःपातिनस्सर्वे यूयं मम सुता इति तात्पर्यम् । पितैव पुत्ररूपेण जायते इति श्रुत्यर्थविचारेण, अहं युष्मासु सर्वेषु अंशरूपेण साक्षिरूपेण चैतन्यरूपेण वा तिष्ठामीति वेदान्तरहस्यमप्यत्र प्रतीयते । १४. एवंप्रकारेण । १५. श्रुतिवचनमुखेन । १६. सत्यवादिनः नाभानेदिष्टस्य वृत्तान्तम् । १७. चित्ताकर्षकम्-मनोरञ्जकमिति यावत् ।

सर्वदा[1] विजयतां[2] विभूतिदं[3]
क्षेम[4]योग[5]भरितं[6] सुखा[7]स्पदम् ॥२६॥

इति श्रीवेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके नाभानेदिष्टचरितकाव्ये संपत्प्राप्तिप्रतिपादकः द्वितीयस्सर्गः । समाप्तमिदं काव्यम् । ॐ तत्सत् ।

---

१. सर्वदा - सर्वकालेषु - सर्वत्रेति च गम्यते । २. सर्वोत्कृष्टत्वेन वर्ततामित्याशयः । ३. सर्वसंपत्करमिति यावत् । ४. लब्धस्य परिपालनं क्षेमम् । ५. अलब्धस्य प्राप्तिः योगः । ६. ताभ्यां पूर्णं योगक्षेमकरमिति तात्पर्यम् । ७. नित्यसुखस्य कारणम्, निश्श्रेयससाधनभूतमिति यावत् ।

अस्मिन्सर्गे मन्त्रशक्तिः- मन्त्रसिद्धिः-दैवभक्तिः-सत्यपालनम्-देवतानुग्रह इत्यादयो धर्मविशेषाः प्रतिपादिताः । अन्तिमपद्यं रथोद्धतावृत्तनिबद्धम् । तल्लक्षणम् "रान्नराविति रथोद्धता लगौ" इति ।

इति श्रीवेङ्कटरमणार्यरचिते काव्यसमुदये वैदिके नाभानेदिष्टचरितकाव्ये संपत्प्राप्तिप्रतिपादकद्वितीयसर्गस्य ग्रन्थकर्त्रा रचिता गम्भीरपदार्थबोधिन्याख्या व्याख्या समाप्ता । समाप्ता चैतत्काव्यव्याख्या । ॐ तत्सदिति ग्रन्थान्ते मङ्गलं बोधकपाठकादिजनानां श्रेयसे भवति ।

---

# विश्वामित्रोदन्तकाव्ये
## प्रथमस्सर्गः

---

नमस्तस्मै[1] भगवते[2] सच्चिदानन्दरूपिणे[3] ।
यत्कृपा[4] कारणं[5] भक्तिज्ञानवैराग्यसंपदाम्[6] ॥१॥
विश्वामित्रो[7] जगति विदितो[8] मन्त्रद्रष्टा[9] महात्मा[10]
विश्वस्यायं[11] यदभवदहो[12] मित्रमित्यस्य[13] नाम ।

---

अस्मिन्सर्गे प्रथमान्तिमपद्ये विना तदितरपद्यानि मन्दाक्रान्तावृत्तनिबद्धानि तल्लक्षणम् :- "मन्दाक्रान्ता जलधिषडगैम्भौं नतौ तो गुरू चेत्" इति । १. "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुत्या परमात्मा वाचामगोचर इति केवलतच्छब्देन निर्देशः । २. भगः अस्यास्तीति भगवान् तस्मै "ऐश्वर्यस्य समग्रस्य धैर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां वर्गो भगः स्मृतः" तद्वान् । इत्यनेनैव तन्माहात्म्यं वेदितव्यम् । ३. सदेव चित् चिदेवानन्दः इति सच्चिदानन्दरूपमस्य श्रुत्या ज्ञायते । ४. यस्यानुग्रहः । ५. निदानमिति यावत् । ६. भक्तिः ज्ञानं वैराग्यं चेति भगवत्स्वरूपसाक्षात्काराय साधनानि-तानि तदनुग्रहादेव संपादनीयानीति तात्पर्यम् । ७. अयं ऋषेर्नामनिर्देशकः । ८. लोकप्रख्यातः । ९. वेदेषु बहूनां मन्त्राणां द्रष्टा । १०. महान् आत्मा (मनः) यस्य सः । ११. सर्वस्य । १२. सर्वेषां मित्रभावेन वर्तनं न सर्वसुलभमिति आश्चर्यद्योतको निपातः । १३. विश्वं मित्रं यस्य सः विश्वस्य मित्रम् इति वा विश्वामित्रः- पूर्वपदस्य "मित्रे चर्षौ" इत्यनेन दीर्घः ।

विश्वेषां[1] यः कुशल[2]करधीर्देवमान्य[3]प्रभावो
विश्वासार्थं[4] स्तुत[5]सुयशसां पात्र[6]मासीदृषीणाम्[7] ॥२॥
ब्रह्मा यस्मादधिकमहिमा[8] कोऽपि नास्त्येव लोके[9]
यन्नाम्नस्स्याद्बृहदिति[10] पदाद्बृंहणार्था[11] निरुक्तिः ।
सोऽयं देवस्सकलजगतां सर्जना[12]दौ निदानं
ज्येष्ठः श्रेष्ठः प्रकृति[13]लसितः पारमेष्ठी[14] चकास्ति ॥३॥

---

१. सर्वेषां यथा त्रिशङ्कुशुनश्शेफहरिश्चन्द्रादीनाम्, तथा अन्येषामपि । २. योगक्षेमचिन्तकः । ३. यस्य तपःप्रभावः- मन्त्र-दर्शनम्-अनन्यसदृशमहिमा च देवैरप्यादरणीय इत्यर्थः। ४. प्रीतये । ५. प्रशस्तकीर्तिशालिनाम् । ६. भाजनम् । ७. ऋषीणां - वसिष्ठ-जमदग्न्यादीनाम् - य एवंगुणोपेतमहिमशाली तस्य विश्वामित्रस्य चरितमारभे इति कवेराशयः । ८. जगतः सृष्टिस्थितिलयरूप-कार्यस्य कर्तेति यः प्रभावः स एव अधिकमहिमा । ९. जगति । १०. बृहदिति पदं बृहिधातोर्निष्पन्नम् । ११. आधिक्यार्था । १२. आदिशब्देन स्थितिलयौ गृह्येते । १३. प्रकृत्या-सांख्यानां प्रधानेन-वेदान्तिनाम् मायाऽदिशब्दगोचरपदार्थेन वा अविद्योगेन वा लसितः प्रकाशितः जगद्रूपेण आविर्भूतः-प्रतिभासितो वा । १४. परमे व्योम्नि (चिदाकाशे) यस्तिष्ठति स पारमेष्ठी "ऋचो अक्षरे परमे व्योमन् । यस्मिन् देवा अधिविश्वे निषेदुः" इत्याद्याः श्रुतयः प्रमाणम् । अत्र परम एव पारमः पारमे तिष्ठति इति पारमेष्ठी इति व्युत्पत्तिः ।

धन्यो[1] ब्रह्माऽखिलजगदिदं शासने यस्य बद्धं[2]
चिद्रूपा[3] या श्रित[4]बहुकला भारती[5] यस्य भार्या ।
देवेन्द्राद्या निज[6]कृतिपरा देवता यत्सहायाः[7]-
स्तेजोदीप्ता[8] वरऋषिगणास्तापसा यस्य वंश्याः[9] ॥४॥
चत्वारस्ते[10] ऋषिगणमुखा मानसास्तस्य[11] पुत्रा-
स्तेषामाद्यो भृगुरिति ऋषिस्तस्य वंशप्रधानः[12] ।
चत्वारोऽस्य प्रथितयशस[13]श्च्यावनाद्यास्सुपुत्राः[14]

---

१. सुसुखीति यावत्-जगत्प्रभुः स्वतन्त्रः सुखरूप इति हेतोः। २. नियतम् । ३. ज्ञानरूपा - अत्र विचारः ब्रह्मापि ज्ञानस्वरूपः भारत्यपि ज्ञानरूपा इति द्वैतप्रसङ्ग इति चेत् अस्तु नाम सर्वोऽपि व्यवहारः द्वैतबद्ध एव । अत्र पतिपत्नीसंबन्धोक्त्या अयमपि व्यवहार एव । ४. चतुष्षष्टिकलानाम् अधिदेवता खलु वाग्देवता । ५. भरति लोकान् व्यप्नोतीति भारती । तथा च भट्टिः "अभार्षीद्ध्वनिना लोका" नित्यादि (२४-२५) । ६. निजासु स्वकीयासु कृतिषु कर्तव्यव्यापारेषु पराः आसक्ताः । ७. जगद्व्यापारेषु यस्य आज्ञाधारणेन सहायभूताः- तथा च श्रुतिः "भीषास्माद्वातः पवते - भीषोदेति सूर्यः" इत्यादि । ८. ब्रह्मवर्चसेन समुज्ज्वलिताः । ९. ब्रह्मैव सप्तर्षिप्रभृतीनां प्रभवः । १०. भृगुः, अङ्गिराः, मरीचिः, अत्रिः, एते चत्वारो प्रथमगोत्रर्षयः । ११, ब्रह्मणः मनस उत्पन्नाः । १२. सर्वेषां भार्गवादीनां मूलपुरुष इति यावत् । १३. प्रथितं-प्रसिद्धं यशः कीर्तिः प्रभावो वा येषां ते । १४. च्यवन एव च्यावन इति स्वार्थे अण् आदिवृद्धिः । आदिशब्दात् इतरे वीतहव्यमैत्रायुवेनास्त्रयोऽपि गृह्यन्ते ।

[1]वंशे तेषामृषिपदगतो जामदग्निः[2] प्रसिद्धः ॥५॥

कीदृग्भाग्यं[3] वरभृगुऋषेर्जामदग्न्यस्सुजातो[4]

यद्वंशेऽभूत्स परमशिवो[5] यस्य विद्याप्रदाता[6] ।

दावाग्निर्यो[7] मदरसजुषां[8] क्षत्रियारण्यकानां[9]

जित्वा योऽदात्सकलधरणीं ब्राह्मणेभ्यो[10] विलासात्[11] ॥६॥

पुत्रस्तस्मात्तदनु जनितो ब्रह्मणो यो द्वितीय[12]-

---

१. गोत्रपरंपरायाम् । २. जामदग्निः-जमदग्निः-जमदग्निशब्दात् जामदग्निशब्दः स्वार्थे निरूपणीयः । छन्दोऽनुगमार्थम् आद्याकारस्य दीर्घोऽङ्गीकृतः । ३. पुण्यम्, भृगुः पुण्यवानिति तात्पर्यम् । यस्य वंशे ऋषिशब्देन व्यवहृताः महापुरुषाः उद्भवन्ति स एव पुण्यवानिति आकूतम् । ४. जमदग्निः भृगुपुत्रः सप्तर्षीणाम् अन्यतमो महर्षिः तस्य पुत्रः, जामदग्न्यः परशुराम इत्यर्थः । ५. महादेवः । ६. धनुर्विद्यागुरुः । ७. दुर्गापरपर्यायपददावस्य (अरण्यस्य) अग्निरिव अयं भार्गवः तात्कालिकदुष्टराजानां नाशकोऽभूदिति तात्पर्यम् । ८. मद एव रसः यथाग्निः वृक्षशरीरान्तस्थं रसं शोषयति तथाऽयं राज्ञां मदं शोषयति-नाशयतीत्यभिप्रायः । ९. क्षत्रिया एव अरण्यकानि तेषां-स्वार्थे कप्रत्ययः । १०. सर्वे क्षत्रियाः यदा निश्शेषीकृताः तदेयं भूर्ब्राह्मणायत्ता कृतेति-भावः । अयं विषयः भारते स्कान्दे (सह्याद्रिखण्डे) अन्येषु पुराणेषु विस्तरेण प्रतिपादितः । ११. अश्रमेणेति यावत् । एकविंशतिवारं क्षत्रियैस्सह युद्धे व्यापृतोऽपि तस्य श्रमो न जज्ञे इत्यभिप्रायः । विलासादिति पदं जित्वा इति पदेन अन्वेति । १२. द्वितीयः पुत्रः-गोत्रर्षिः ।

श्श्रुत्या प्रोक्तो[1] विदितसुयशा[2]स्सोऽङ्गिराः कर्मनिष्ठः[3] ।
उच्चात्या[4]द्यास्त्रिदश[5]जनितास्तत्कुले गौतमर्षि-
भारद्वाजोऽप्यृषि[6]रभवतां[7] सप्तके[8] द्वावृषीणाम् ॥७॥

पुण्योपेता[9]स्तपसि नियता[10] येऽङ्गिरोवंशजाताः
प्रख्यातोऽयं सततपसा गौतमर्षिः प्रशान्तः[11] ।
शापान्[12]मुक्ता रघुपतिपदस्पर्शना[13]द्यस्य भार्या
साऽहल्याऽहो ऋषिजनपथ[14]श्शक्यते केन वक्तुम्[15] ॥८॥

भारद्वाजोऽयमपर[16]ऋषिस्सोऽपि तद्वंश[17]जातो

---

१. वेदेषु प्रसिद्धः । २. तस्य यशःप्रभावःविशेषेण विदितो भवति । ३. सत्रादियागकर्ता । ४. उचात्यः-अयास्यः वामदेवः-गोतमः-संवर्तः-उशीजः-बृहस्पतिः-पृषण्डाश्वः, कण्वः-मुद्गलः-संकृतिः-पुरुकुत्सः- अम्बरीषः इत्येते त्रयोदश । ५. त्रिभिः अधिकाः दश त्रयोदश इति यावत् । ६. अत्र अपि ऋषिरिति पदच्छेदः । ७. लङि प्रथमपुरुषद्विवचनम् । ८. समुदायार्थे कप्रत्ययः, ऋषीणां सप्तके-सप्तर्षिषु मध्य इति भावः । ९. धर्मात्मानः । १०. तपोनिष्ठाः । ११. शान्तमानसः । १२. "त्वं शिला भवे"ति पतिदत्तशापात् । १३. श्रीरामपादस्पर्शनात् । ऐतिहासिकोऽयं वृत्तान्तः रामायणादौ द्रष्टव्यः । १४. ऋषीणां चेष्टितानीति तात्पर्यम् । १५. वक्तुं न शक्यते इति प्रश्नसंभावनार्थः । अत एवोक्तम्-"अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च । सर्वदा नियमस्थस्य सदा सानुग्रहा ग्रहाः" इति । १६. गौतमादन्य ऋषिः । १७. अङ्गिरोवंशे ।

येनाकृष्टः[1] श्रुतिततिगिरे[2]र्मुष्टिमात्रो[3]ऽस्ति वेदः ।
आयुर्वेदे[4]ऽप्यमलधिषणस्संहितां[5] यो व्यतानी[6]-
च्छिष्या यस्य प्रथित[7]यशसस्संबभूवुर्बहुत्र[8] ॥९॥
धातु[9]र्जातो रविकुल[10]हितो यस्तृतीयो[11] मरीचि-
स्तद्वंशेऽभूद्विदितमहिमा[12] कश्यपोऽयं महर्षिः ।
आवत्सार[13]प्रभृतितनया जज्ञिरेऽस्याब्धि[14]संख्या-

---

१. आनीत इति यावत् । २. अद्रिसदृशवेदराशेः। ३. पाणितलस्य प्रसृतिदशायां तर्जन्यादिचतुरङ्गुलिषु निकुञ्जभावेन पाणिमूलं स्पृष्टवतीषु सतीषु अङ्गुष्ठतले प्रदेशिनीपृष्ठावलम्बिते सति यद्रूपं निष्पद्यते तस्य मुष्टिरिति संज्ञा । मुष्टेरन्तः यावन्मात्रं स्थापयितुं शक्यते तावन्मात्रमित्यर्थः । इदं वैदिकमैतिह्यं वेदेषु प्रसिद्धम् । ४. न केवलमयं वेदवेदाङ्गवित् अपितु प्राणिनां आरोग्यापादकस्य आयुर्वेदस्य संहिताकृदिति च अपिशब्देन बोध्यते । ५. इन्द्रस्य सकाशदायुर्वेदमधीत्य शिष्यानध्याप्य स्वबुद्धिं प्रकाशितवानित्यर्थः । ६. रचितवान् । ७. प्रसिद्धकीर्तयः । ८. अनेकत्र । ९. ब्रह्मणः । १०. सूर्यवंशस्यादिमः । ११. तृतीयः पुत्रः । १२. विदितः-प्रसिद्धः महिमा-सर्वप्राणिजातीनां याः प्रथमजनयित्र्यः तास्सर्वाः कश्यपस्य भार्या आसन् तेनायं प्राणिनां मूलपुरुष इत्यादिप्रभावः, यस्य सः । १३. आवत्सारः- असितः- विवस्वान् - मैत्रावरुण इत्येते । १४. चत्वार इति यावत् ।

स्तद्वंश्येषु[1] प्रथितगरिमा[2] योगनिष्ठो[3] वसिष्ठः ॥१०॥
मारीचा[4] ये जगति विदितास्सूर्यवंशाभिजाता–
स्तेषामासीत्प्रथमजनितः[5] कश्यपो वश्यलोकः[6] ।
जातेर्जातेः प्रभवं[7] इह यः प्राणिनां[8] जन्मभाजां
यन्नाम[9] स्याद्विहितकरणे[10] नष्टगोत्रस्य[11] गोत्रम् ॥११॥
[12]तद्वंशस्थो रविकुलगुरुः[13] श्रेष्ठनामा[14] वसिष्ठो
येनाप्तं[15] तत्कुशिकजयुधि[16] ब्रह्मतेजो[17] बलिष्टम् ।

---

१. मरीचिवंशजातेषु । २. प्रथितः गरिमा गुरुत्वं (गुरुभावः इति यावत्) यस्य सः । ३. योगे-आत्मानुसन्धाने निष्ठा-निर्वहण-व्यापारः यस्य सः । ४. मरीचेः गोत्रापत्यानि पुमांसः । ५. कश्यपः मरीचेः पुत्रः खलु । ६. कश्यपसन्ततयः सर्वा जातयः इति पौराणिकी गाथा । ७. उत्पत्तिस्थानम् । ८. पूर्वस्मिन् श्लोके द्वितीयपादव्याख्याने स्पष्टीकृतम् । ९. काश्यप इति नाम । १०. तर्पणश्राद्धादिकर्मसु । ११. यस्य मृतस्य गोत्रं न ज्ञायते तस्य काश्यपगोत्रत्वेन व्यवहार-सिद्धिः शास्त्रतः अनुभवतश्च दृष्टा । १२. काश्यपवंशोद्भवः । १३.मनुदिलीपादीनां रविवंशजानां कुलगुरुः। १४. श्रेष्ठं नाम यस्य सः ब्राह्मणजतौ श्रेष्ठ इति यावत् । १५. यन्निष्टं यद्गतमिति यावत् , अत्र आप्तिः स्वभावतः न तु कर्मतः, प्रयत्नतो वा-यथा विश्वामित्रादिषु । अनेन वसिष्ठस्य ब्रह्मतेजसश्च स्वाभाविकसम्बन्धो बोध्यते । १६. विश्वामित्रेणाऽऽपादिते युद्धे । १७. ब्रह्मसंबंधि तेजः अत्यन्तप्रभावत् अत एव रामायणे "धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम्" इति विश्वामित्रोक्तिः ।

दृष्टा येन श्रुतिचयगता यागयोग्याश्च[1] मन्त्रा
योगज्ञो[2]ऽयं कृतपरतपा[3] ज्ञानसिद्धः[4] प्रसिद्धः ॥१२॥
तुर्यः[5] पुत्रो विधुकुलहितो[6] ब्रह्मणोऽत्रिर्महर्षि-
स्तत्पुत्राश्च त्रय इति विदुर्ह्यर्चनानः[7]प्रधानाः ।
विश्वामित्रोऽत्रिरिव[8] स ऋषिः ख्यातसप्तर्षिसङ्घे[9]
तद्वंश्याश्च स्तिमितमनसो मंत्रदृश्वान आसन् ॥१३॥
अत्रिश्चायं वर ऋषिरिति प्रोच्यते लोकमान्यैः[10]
श्रेष्ठा साध्वी[11] विमलचरित्रा[12] यस्य[13] भार्याऽनसूया ।
दत्तः[14] पुत्रो ह्यजहरिहरोपात्तदेहो[15] महात्मा

---

१. ऋग्वेदस्य सप्तममण्डलस्थमंत्राः वसिष्ठेन दृष्टाः अत एव क्रतुषु बहुधा प्रयुक्ताः । २. स योगज्ञ इति तत्कृतयोगवाशिष्ठावलोकनेनैवाऽवगम्यते । ३. तपस्विषु श्रेष्ठाः । ४. त्रिकालज्ञोऽयं महर्षिः, अतः राज्ञो दिलीपस्य पुत्रप्राप्तिप्रतिबन्धकारणं क्षणमात्रालोचनेन विज्ञाय राज्ञे तन्निवेद्य तच्छान्त्युपायश्च प्रदर्शित इति रघुवंशग्रन्थवाचकानामयं विदितविषय एव । ५. ब्रह्मणः चतुर्थः पुत्रः । ६. चन्द्रवंशस्य मूलपुरुषः । ७. अर्चनानाः- सोमः-उत्तानपाद इति-त्रयः पुत्राः । ८. अत्रिः यथा सप्तर्षीणां मध्ये प्रसिद्धः तथा विश्वामित्रोऽपीत्यर्थः । ९. सप्तर्षिसमूहे-सप्तर्षिष्विति यावत् । १०. वेदविद्भिरिति तात्पर्यम् । ११. पतिव्रता । १२. निर्दुष्टशीला । १३. अत्रेः । १४. दत्तात्रेय इति लोके प्रसिद्धः । १५. त्रिमूर्तिस्वरूप इत्यर्थः । अजश्च हरिश्च हरश्च अजहरिहराः तेभ्यः उपात्तः देहः येन सः ।

वाक् श्री[1]र्गौरी ह्यधिगतप[2]तिर्यद्दयापा[3]त्रभूता ॥१४॥

अत्रेः पुत्रो नृपकुलपि[4]ता भाति सोमो द्वितीयो[5]
राजा योऽभूत्तरुतृणलताद्युद्भिजां[6] तारकाणाम्[7] ।
तत्पुत्रोऽभूद्बुध इति वरो वल्लभो[8]ऽभूदिलायां[9]
मध्यस्थो[10] यस्सुमति[11]फलकृत्सप्तके[12] तद्ग्रहाणाम् ॥१५॥

सौम्य[13]स्यासीत्प्रवरकुलजः ख्यातपौरूरवो[14]ऽसौ
तस्यैवाऽमावसुरिति सुतो वंशदीपो[15] रराज ।
जातस्तस्मात्कुशिकनृपतिस्साधुकीर्तिप्रभावो[16]
मन्त्रद्रष्टा स इति कथितं ह्यागमे[17] बह्वृचानाम्[18] ॥१६॥

---

१. त्रिमूर्तीनां भार्याः । २. अधिगतः पतिः यथा सेति प्रत्येकतो विशेषणम् । ३. अत्रेः तत्पत्न्या अनसूयायाश्च कृपावशात्- वाक् श्रीः गौरी च अधिगतपतिरिति तात्पर्यम् । पौराणिकीयं कथा । ४. क्षत्रियकुलस्य मूलभूतः । ५. द्वितीयः पुत्रः । ६. ओषधीनाम् । ७. नक्षत्राणाम् । ८. पतिः । ९. मनोस्सुतायाः इलानामकवध्वाः । १०. चतुर्थग्रह इति यावत् । ११. ज्ञानप्रदः अतः अस्य "ज्ञ" इति ज्योतिश्शास्त्रे सङ्केतनाम । १२. सप्तग्रहमध्ये । १३. बुधस्य । १४. पुरूरवाः वेदप्रसिद्धो राजा, अस्य अत्र छन्दस्सौकर्यार्थं पौरूरव इति प्रयोगः संज्ञावाचकत्वाददोषः । १५. वंशश्रेष्ठः । १६. कीर्तिश्च प्रभावश्च कीर्तिप्रभावौ साधू कीर्तिप्रभावौ यस्य सः । सन्मार्गेण राज्यपरिपालनजन्या कीर्तिः-प्रतापेन युद्धेषु शत्रुविजयलब्धः प्रभावः । १७. वेदभागेषु बहुवचनार्थे एकवचनप्रयोगः । १८. ऋग्वेदिनाम् ।

लोकास्सर्वे कुशिकनृपतेस्सप्रजा[१]स्तुष्टिभाजो

देवो[२]ऽवर्षीदृतुषु[३] सकलं सस्यजातं[४] प्रवृद्धम्[५] ।

तस्मिन् राज्ये न किमपि भयं नेतयो[६] नारिबाधा[७]

स्वस्थास्[८]सर्वे सुखपरवशा[९]श्शान्तचित्ता[१०] विधेयाः[११] ॥१७॥

जातः काले कुशिकनृपतेर्गाधिसूनुस्सुतेजा-

स्सोऽत्रेर्ग्लौ[१२]र्वन्मनु[१३]रिवरवेर्मूर्तिमान्[१४] धर्म एषः ।

राजा भूत्वा सकलसुकलासम्पदा[१५] सम्पदाढ्यान्[१६]

कृत्वा लोकान् स्वतनय[१७]धिया पालयामास सर्वान्॥१८॥

---

१. सन्तानसहिताः । २. इन्द्रः- पर्जन्यो वा । ३. वर्षप्रादुर्भावयोग्यकालेषु । ४. यवगोधूमादिसस्यानि । ५. प्रकृष्टेन फलितम् । ६. "अतिवृष्टिरनावृष्टिर्मूषिकाश्शलभाःशुकाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ।" तासां बाधा नासीदित्यर्थः । ७. शत्रुबाधोपि नासीत् । ८. स्वास्थ्येन स्थिताः- समाहितचित्ता इति यावत् । ९. सुखायत्ताः । १०. प्रशान्तमानसाः । ११. राजाज्ञापालकाः- राजभक्ता इति यावत् । १२. अत्रेस्सकाशात् यथा चन्द्रः । १३. सूर्यस्य सकाशान्मनुर्यथा तथेत्युपमानद्वयप्रयोजनं सूर्यवत्प्रतापशाली चन्द्रवदाह्लादजनक इति सूचयितुम् । १४. मूर्तीभूतः-धर्मस्वरूप एवेति भावः । १५. सकलाः- अखिलाः, सुकलाः कृषिशिल्पवाणिज्यचित्रवस्तुयंत्रतंत्रादिसाधकविद्याः, तासां सम्पदा प्राचुर्येण । १६. भूगेहधनकनकादिभिः पूर्णान् । १७. स्वतनयनिर्विशेषबुध्या ।

लोके कीर्तिर्भुवनविदिता देवतानुग्रहात्ता
वेदे ख्यातिर्वरऋषिहिता मन्त्रदर्शीति बद्धा ।
युद्धे ख्याती रिपुगजहरिश्शौर्यशालीति वार्ता
स्वर्गे कीर्तिस्सुरपतिनिभो लोकशंस्तेति सिद्धा ॥१९॥

दैवादस्माद्विहितसमये गाधिराजाद्वि जज्ञे
विश्वामित्रोऽसमबलसुतस्सूर्यसङ्काशतेजाः ।
देवा हृष्टा वरमुनिजनास्संप्रहृष्टास्तदानीं

---

१. प्रसिद्धा । २. भगवत्प्रसादेनास्य कीर्तिस्सर्वत्र व्याप्तेत्यर्थः । ३. महिमा - कस्येत्याकांक्षायां गाधेरिति पूर्वापरपद्यावलोकनेन ज्ञातं स्यात् । ४. ऋषीणां परमप्रीत्यास्पदा कुतः मन्त्राणां द्रष्टाऽयम् इति हेतोः । ५. प्रसिद्धिः- अत्र "रोरी"ति सूत्रेण पूर्वरेफस्य लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इति सूत्रेण इकारस्य दीर्घः । ६. रिपव एव गजाः तेषां सिंह इवायम् । ७. यशः- प्रसिद्धिर्वा । ८. सुरपतिना महेन्द्रेण समानः । ९. लोकपाल इति । १०. सुकृतपुण्यवशात् - "पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते" इत्यभिजनोक्तिः । ११. यौवने वयसि स्थितेऽस्मिन् इत्याकूतम् । १२. शरीरदार्ढ्ये बुद्धिशक्तौ च अनेन समोऽन्यो नास्तीति तात्पर्यम् । १३. सूर्येण तुल्यं तेजः यस्य सः । १४. हर्षं प्राप्ताः । १५. अतिशयेन हर्षं प्राप्ताः । १६. विश्वामित्रस्य जननसमये ।

राज्ञां मौलि[1]र्भवति सुनि[2]रित्यूचिरे[3] ज्योतिर्ज्ञाः[4] ॥२०॥
विद्याभ्यासोऽभवदतितरां[5] वेदवेदाङ्ग[6]जाते
प्रद्योता[7]स्य स्फुरदकुटिला[8] शास्त्र[9]धीर्भूरिवर्त्मा[10] ।
योगाभ्यासं[11] तदनु च धनुर्वेद[12]तत्वान्यधीत्य

---

१. राजशेखरः राजश्रेष्ठ इति यावत् । २. मत्रद्रष्टा । "ऋषयो मंत्रद्रष्टारः" इति। श्रुतिः यस्य वाक्यं स ऋषिरिति निरुक्तकारश्च 'ऋ'गतौ इति धातोः ऋच्छति-गच्छति (वेदवाक्यानधिगच्छति इति जानाति ज्ञानदृष्ट्या पश्यतीति) तस्य व्युत्पत्तिः । ३. आत्मने पदेऽपि प्रयोगोऽस्तीति ज्ञापनार्थं ऊचुरिति स्थाने ऊचिरे इति प्रयोगः । ४. दैवज्ञाः ज्योतिर्विद इत्यर्थः । ५. सम्पूर्णम् इति यावत् । ६. वेदाश्चत्वारः ऋग्यजुस्सामाथर्वनामानः । वेदाङ्गानि षट् । शिक्षा-व्याकरणं-छन्दः-निरुक्तं-ज्योतिषं-कल्पश्चेति तेषु सर्वेष्वित्यर्थः । ७. प्रकर्षेण राजिता । ८. दुरूहेषु पदेषु वाक्येषु च झटित्यर्थावबोधः स्फुरणं वक्रगतिं विना यथावदर्थावबोधः अकौटिल्यम् । ९. एतद्गुणसंपन्ना अस्य धीः- बुद्धिः शास्त्रेषु न्यायमीमंसादिशास्त्रेषु प्रवृत्तेति वाक्यार्थः । १०. अनेकमार्गावगतिशीलेति यावत् । ११. राजयोगे – यमनियमासनप्राणायामप्रत्याहाराख्यपञ्चयोगसाधनानन्तरं, धारणाध्यानसमाधिकलितानेकसंयमोपात्तसमाधिविशेषेषु अभ्यासं यावत्सिद्धि पुनःपुनराचरणम् । १२. धनुर्वेदे यानि तत्वानि बाणप्रयोगप्रत्याहाररूपाणि यंत्रादिद्वारा शत्रुनिग्रहापेक्षितसंविधानरूपाणि तानीति तात्पर्यम् ।

[1]रेजे वाचस्पतिरिव[2] भृशं राजधर्मप्रवीणः[3] ॥२१॥
एवं बालोऽनयदभिनुतं[4] ब्रह्मचर्यं[5] वरिष्ठं[6]
स्त्रीमुद्वाह्य प्रियगुणसतीमाश्रमेऽस्मिन् द्वितीये[7] ।
देवान्विप्रानतिथिबहुलाभ्यागतान्पूजयित्वा

---

१. प्रकाशितवान् । २. बृहस्पतिरिव । अत्रोपमायाः साधारण-धर्मः योगाभ्यासः धनुर्वेदतत्वाप्तिः राजधर्मप्रावीण्यं चेति वेदितव्यम् । ३. बृहस्पतेः राजधर्मप्रावीण्यं तु सुरगुरुत्वात् स्मृतिराजबृहस्पतिस्मृति-कर्तृत्वाच्चेति बोध्यम् । ४. सर्वतोऽनवद्यम् । ५. ब्रह्मणि-वेदे चर्यम्-अध्ययनानुष्ठानरूपं कार्यम् । ६. इतरेभ्य आश्रमेभ्योऽप्युत्तमतरम्, अथवा चतुर्ष्वप्याश्रमेषु श्रेष्ठम् - कथम् ? गार्हस्थ्ये कर्मबाहुल्येन उद्वेजनं तत्तत्कर्मापेक्षितद्रव्यसम्पादनार्थं शरीरबुद्धिश्रमः तेन व्यसनं, वानप्रस्थे शीतातपादिबाधा युक्ताहारप्रयोजकसामग्र्यभावाद्देहदौर्बल्यम् तेन दुःखं, सन्यासे विषयवासनास्मृतियोगेन चापल्यं बुद्धिचांचल्यं निद्रायासादिप्रत्यूहाः तेन मनसः अशान्तिः, ब्रह्मचर्ये तु वेदशास्त्र-विनोदेन बुद्धिप्रकाशः चित्तहर्षणं मनश्शान्तिरिति अस्य वरिष्ठत्वं ज्ञातव्यम् । ७. अभिमतगुणसम्पन्नां सतीनाम्नीं वधूम् । ८. गृह-स्थाश्रमे । ९. अतिथयः केचित्-अभ्यागतास्त्वनेके । अतिथिः वेदा-ध्यायीति आपस्तम्बः । ग्रामे एकरात्र्यधिकं यो न तिष्ठति सोऽतिथि-रिति केचित् । विधिपूर्वकं निमंत्रित इत्येके । १०, भिक्षार्थमागताः अभ्यागताः इति केचित् श्रोत्रिया इत्यन्ये । वैश्वदेवात्पूर्वमागताः अतिथयः· वैश्वदेवादनन्तरमागताः- अभ्यागताः इत्याश्वलायनः ।

गार्हस्थ्यं[1] स्वं निभृतम्[2]अनिशं सर्वतुष्ट्यै[4] समावीत्[3] ॥२२॥
पित्रा मोदान्[4]नृपजनहितो[5] यौवराज्ये[6]ऽभिषिक्तो
राजद्वारे[7] स परिकलिता[8]शेषसंस्थासु[9] संस्थः[10] ।
तूर्णं[11] पूर्णं[12] परिचयमुखा[13]च्छिक्षितो[14] राजकार्ये[15]
दक्षो[16]ऽभूत्तात[17]पितृकरगतं राजतन्त्रं[18] च धर्तुम्[19] ॥२३॥
दृष्ट्वा पुत्रं जनहितकरं[20] वांछितं[21] च प्रजानां
स्वस्याप्यायुःपरिणतिमयं[22] गाधिराजोऽथ मेने ।
राज्ये मेऽस्मिन् तनयमचिरात्स्थापयित्वा[23] मयाऽमुं

---

१. गृहस्थधर्मम् । २. निश्चलम् । ३. सम्यक्पालितवान्-संपूर्वकात् अवरक्षणे इति धातोः लुङि रूपम् । ४. सन्तोषेण । ५. सामन्तभूपतीनां प्रजानां च प्रियः । ६. युवराजं कृत्वेति-भावः। ७. समस्तराजकार्यनिर्वाहकप्रधानस्थाने । ८. राजकार्यनिर्वाहार्थं परिष्कृतेषु रचितेष्विति यावत् । ९. सर्वेषु राजकीयस्थानेषु । १०. सम्यक्-युक्तकालं (तत्तद्राजकार्यपरिचयाभ्यर्हितमिति यावत्) तत्र तत्र स्थितस्सन् । ११. अतिक्षिप्रम् । १२. साकल्येन । १३. प्रयोगविधिज्ञानवशात् । १४. अधिगतशिक्षणः। १५, राजकीय-कार्येषु । १६. समर्थः । १७. गाधिराजायत्तम् । १८. राज्यभारमिति यावत् । १९. निर्वोढुम् । २०. प्रजानां योगक्षेमकार्येष्वासक्तम् । २१. अभिप्रायम् आकांक्षां वा । २२. गतायुःपरिमितिम् । २३. अभिषिच्य राजानं कृत्वेति यावत् ।

वानप्रस्थे[1] भवितुमुचितं[2] क्षात्रधर्मो[3]ऽयमार्यः[4] ॥२४॥
आहूयायं जनपद[5]जनान्नागरान्[6]मित्रभूपान्[7]
भद्रे लग्ने[8] निजसुतमलं स्वस्य राज्ये[9]ऽभ्यषिंचत् ।
विश्वामित्रो विमलमतितो[10] राज्यतंत्रे प्रविष्टः[11]
प्रख्यातो[12]ऽभूत्स्तुत[13]नयगतिश्शासने स्वप्रजानाम् ॥२५॥

---

१. वानप्रस्थाख्यतृतीयाश्रमधर्मे । २. न्याय्यम्-अत्र उचितमिति कारकक्रियायाः कर्तृपदं किमिति विवक्षायां "वानप्रस्थे भवितु" मिति तुमन्नंतापादितं पदमित्युत्तरे अभिहिते-कथं तुमन्नंतपदमव्ययरूपं कर्तृपदं स्यादित्याकांक्षायां भवितुं भवनमित्यर्थानुसंधानेन भावनिर्देशात् सामञ्जस्यमुपपादनीयम् । मया (एवं) भवितुमुचितं-मम (एवं) भवनमुचितं-मया एवं भूयते इति वाक्यविपरिणामेन भावे प्रयोगोऽत्र बोध्यते इत्यलमध्यापकबुद्धिविस्तरेण । 'वार्धके मुनिवृत्तिः' तत्पूर्वं स्वनिष्ठराज्यधौरंधर्यं स्वपुत्रे निक्षेपणमित्ययं । शास्त्रविहितः । ३. क्षत्रियधर्म एव । ४. अपि च आर्याणामयमेव धर्मः। अनार्येषु राज्यशासनरीतिर्यथा वा भवतु । आर्येषु तु राजकुले पुत्रपौत्रपरंपरया राज्यधुरन्धरत्वं चिरकालात्संप्रदायागतमिति भावार्थः । ५. ग्रामवासिनः । ६. पत्तनस्थान् । ७. सुहृत्सामंतनृपान् । ८. शुभे लग्ने । ९. स्वेनानुभूतराज्ये । १०. निर्मलप्रज्ञावशात् । ११. राज्यशासने प्रवृत्तस्सन् । १२. प्रसिद्धः । १३. स्तुताः प्रशस्ताः सर्वाभिः प्रजाभिः प्रशंसनीयाः, नयाः राजनीतयः यासु ताः तादृशः गतयः-मार्गाः यस्य सः- अथवा स्तुताः, नयस्य - राजशासनधोरण्याः गतयः (प्रवर्तनानि-प्रचारा वा) यस्य सः ।

प्राजापत्यं[1] स्वनुभवकृतं[2] राज्यमैन्द्रं[3] स्वराज्यं[4]
यत्र स्वस्था[5] विमलचरिता[6] सत्यशीला[7] प्रजाऽऽसीत्[8] ।
राज्ञो यत्र प्रकृतिषु[9] परां[10] प्रीतिरास्ते स्वभावा-[11]
त्तासां[12] राज्ञि प्रकृतिवशतो राजभक्तिः[13] स्थिरा[14]ऽत्र[15] ॥२६॥
सञ्चारार्थं[16] स नृपतिरिला[17]चारुसौभाग्यमारा-[18]
द्द्रष्टुं ग्रामान् जनपदगतान्[19] शैलमुख्यान्[20] वनान्तान्[21] ।

---

१. प्रजापतिनाऽधिकृतं राज्यमिव । २. अनुभवेनायम् अकरोदिति राज्यशासनप्रशस्तिरिहाऽभिप्रेता । ३. इन्द्रसंबंधिराज्यमिव - स्वर्गलोक इव । ४. स्वेनाधिकृतं राज्यम् । ५. क्षामडामरादिभिर्वा राज्यक्षोभकृद्व्यापारैर्वा अस्पृष्टाः स्वस्थमानसाः । ६. विमलम्-देशक्षेमकारिपरोपकारककार्यविशेषसम्पादितम् अत एव निर्दुष्टं चरितं येषां ते । ७. सत्यावलम्बिनः । ८. जना इति यावत् । ९. प्रजासु । १०. उत्कृष्टा । ११. निसर्गतः न तु प्रशंसाभिलाषेण । १२. प्रजानाम् । १३. राज्ञि प्रीतिः । १४. चिरस्थायिनी । १५. तस्मिन्देशे "यत्तदोर्नित्यसम्बन्धः" इति विधिनात्र 'तत्र' इति प्रयोगस्समुचितः-तथापि इदंतदोः निकटसंबन्धमालोच्य 'तत्र' पदस्थाने 'अत्र'पदप्रयोगः कविसमयोचितः छन्दोगत्यपेक्षित इति समाधेयम् । १६. देशसञ्चाराय । १७. इलायाः- भूमेः, चारु-मनोहरं सौभाग्यम् - सस्यफलसमृद्धिं वा विहगमृगसंचारसौन्दर्यं वा । १८. आराद्दूरसमीपयोरिति कोशबलेन समीपस्थान दूरस्थांश्च विषयानित्युभयथान्वयद्योतकमिदम् । १९. देशेषु विद्यमानान् । २०. प्रसिद्धपर्वतान् । २१. वनमध्यप्रदेशान् काननविशेषानिति यावत् ।

सेनायुक्तो दृढ[1]परिकरो भव्य[2]शौर्येण दीप्तो[3]
वज्री[4]वाऽद्रीन् परखल[5]जनान् शिक्षितुं प्रो[6]ज्जगाम ॥२७॥
गच्छन् मार्गे धरणि[7]शरणावेदिता वृत्ति[8]वार्ता-
श्श्रुत्वा तेषां हितकरविधीन्[9] साधयित्वा[10] क्षणात्[11]सः ।
कृत्वा सर्वा मुदित[12]सुखितास्स्व[13]प्रजास्सत्प्र[14]जास्ता
योगक्षेमा[15]वनकृतमतिः कृष्णवत्[16]स्वाश्रितानाम्[17] ॥२८॥

---

१. दृढाः- बलाढ्याः परिकराः-सेवकजनादयः यस्य सः । २. सकलकल्याणापादको यः पराक्रमः तेनेत्यर्थः । ४. प्रकाशमानः । ४. इन्द्रः शैलान् यथा । ५. परे शत्रवः खलाः दुष्टजनाः तान् । ६. सोत्साहमगात् । ७, धरणिरेव - भूमिरेव, शरणम्-सर्वदा रक्षकवस्तु येषां ते धरणिशरणाः- कृषीवलाः, तैरावेदिताः- कष्ट-परिहाराय राज्ञे निवेदिताः । ८. वृत्तीनां स्वस्वव्यापाराणां संबंधिवार्ताः- वृत्तान्तान् । ९. अनुकूलसाधनानि - कार्याणि वा । १०. सम्पाद्य । ११. अविलम्बं यथा । १२. मुदिताः हर्षयुक्ताः सुखिताः सुखेन जीवितुं शक्ताः । १३. स्वदेशवासिन्यः प्रजाः । १४. सन्मार्गावलंबिन्यः। १५. तासां अलब्धलाभलब्धस्थितिपरिपालने निश्चिता मतिः यस्य सः । १६. भगवान् श्रीकृष्ण इव । १७. स्व-भक्तानाम् - स्वप्रजानामिति प्रकृतार्थः । "अनन्याश्चिंतयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" इति । यथा श्रीकृष्णः स्वभक्तानां योगक्षेमविषये बद्धशपथोऽभूत्तथायं विश्वामित्रस्स्वप्रजाविषये समवर्ततेत्यभिप्रायः ।

आज्ञां[1] प्राज्ञो[2] जलवसतिदे[3] सौख्यदे[4] कार्यभारे[5]
वाणिज्याय[6] व्यवसितकृतिष्वादरात्[7]सोऽददात्[9]ताम्[10] ।
विद्याभ्यासे[11] जनततिगते[12] वीक्ष्य वृद्धिं[13] प्रजानां
हर्षोत्कर्षं[14] जनपदगतं[15] सोऽन्तरङ्गे[16] जहर्ष[17] ॥२९॥
नीत्वा कालं स्वजनसुखदं[18] कंचिदाप्यं[19] प्रजानां
प्रीत्या देशे प्रकृतिसरणिं[20] वीक्ष्य संमोदमानः[21] ।
वासिष्ठानां[22] परिचयमयं[23] काकतालीयभङ्ग्या[24]

---

१, राजशासनम् । २, विचक्षणः । ३. स्नानपानार्थं कृष्याद्यर्थं च जलानुकूल्यप्रदे । ४. सुखप्रदे । ५. कूपखननतटाकनिर्माणमहाकुल्याऽभिनिष्पत्तिरूपमहाकार्ये । ६. क्रयविक्रयानुकूलपदार्थागमनिर्गमव्यापाराय । ७. व्यवस्थापितोद्यमेषु । ८. प्रीतिपुरस्सरम् । ९. चकार-कृतवान् । १०. 'आज्ञा'मिति पदस्य विशेषणमिदम् । ११. अभिनुताभिमतविद्यासंपादने । १२. जनेषु व्याप्ते सति । १३. सर्वत्र समृद्धिम् । १४. अतिशयसन्तोषम् । १५. प्रजास्वनुगतम् । १६. स्वहृदये । १७. प्रमुमुदे । १८. स्वप्रजानां सुखप्रदम् । १९. आप्यायमानम् अथवा प्रजाभिः आप्तुं योग्यम्, प्रजाः निर्भयं राजानमाप्त्वा स्वस्वहितायापेक्षितानि साधनानि प्राप्तास्सुसुखं जीवंति स्मेत्याकूतम् । २०. जनानां जीवनरीतिं देशे प्रकृतिसौन्दर्यं वा । २१. सन्तुष्टस्सन् । २२. वसिष्ठशिष्याणां वसिष्ठसंबन्धिमुनिजनानां वा । २३. प्रथमवीक्षणकृतसम्बंधम् । २४. काकः अशनापेक्षया अन्तरिक्षे डयमानस्सन् यदा आगतः तदा तालवृक्षात्पक्वफलमपि तस्य तुण्डे अपतदित्यर्थमनुसंधाय, काकागमनवत् तालपतनवदिति 'छ'प्रत्ययेन

मार्गे प्राप्त[1]सुकृतवशतो[2] लिङ्ग[3]मेतत्[4]समृद्धेः[5] ॥३०॥
वासिष्ठै[6]स्तैरमलहृदयै[7]राश्रमं तन्महर्षे[8]-
भूयो[9] भूयः प्रणतिविनयैः[10] प्रार्थितो[11]ऽयं प्रवेष्टुम् ।
विश्वामित्रो विनय[12]चरितस्सम्मतिं सन्ददौ[13] स्वां
भव्योदर्कौ[14] जनयति मतौ[15] पथ्यपद्यां[16] प्रवृत्तिम्[17] ॥३१॥
वासिष्ठं[18] तं मुनिजनवृतं[19] वेदघोषैः[20] पवित्रं[21]
श्रेष्ठावासं[22] शुकपिकमृगै[23]राश्रमं जुष्टरम्यम्[24] ।
विश्वामित्रः परिजनवृतो[25] युक्तकाले[26] प्रविश्य

---

कृतमिदं पदं उपमाद्योतकं, यदृच्छया पतितमित्यभिप्रायः।

१. लब्धवान्।२. पुराकृतपुण्येनेत्यर्थः। ३. सूचकम्। ४. एतत् वासिष्ठपरिचयरूपं कार्यम् । ५. स्वसमृद्धिलाभस्य। ६. वसिष्ठसम्बन्धिभिः।७. निष्कपटान्तरङ्गैः। ८. वसिष्ठस्य। ९. पुनः पुनः। १०. प्रणामैर्विनयं प्रदर्शयद्भिरिति तात्पर्यम्। प्रणतयश्च विनयाश्च तैः। ११. अभ्यर्थितः। १२. विशेषेण नययुक्तं चरितं यस्य सः ऋषिजनादृतसंप्रदायविदिति भावः। १३. अङ्गीचकारेत्यर्थः। १४. आगामिशुभलाभः। १५. स्वबुद्धौ । १६. हितकरगतौ । १७. प्रेरणाम् । १८. वसिष्ठसम्बन्धिनम्। १९. ऋषिजननिबिडम्। २०. वेदाध्ययनध्वानैः। २१. पूतम्-पवित्रीकृतमिति यावत्। २२. श्रेष्ठजनानाम् आवासभूतम् - आवासस्य परमयोग्यमिति वा। २३. शुकाः पिकाः मृगाः (हरिणाः) तैः-एते सर्वेषां आश्रमवासयोग्यमृगपक्षिणामुपलक्षणभूताः। २४. शुकपिकमृगैः जुष्टं-सेवितम् अत एव रम्यं मनोहरम्। २५. सपरिवारः। २६. प्रवेशार्हऋषिदर्शनानुकूलसमये।

प्रत्युद्गम्य[1] प्रवरमुनिभिः[2] पूजितः[3] संप्रदायैः[4] ॥३२॥
विश्वामित्रो विदितसमयः[5] प्राञ्जलिस्तं[6] वसिष्ठं
भक्त्योपेतो[7] जपपरधियं[8] सादरं[9] संप्रणम्य[10] ।
तस्थौ सोऽमुं नृपतिमुचिते[11] स्वासने[12] चासनार्थं[13]
संबोध्यास्मै[14] समयविदयं स्वागतं[15] काङ्क्षति[16] स्म ॥३३॥
पप्रच्छामुं कुशलमसकृद्राजवर्गे[17]ऽस्य सैन्ये[18]
[19]देशे कोशे[20] गजहयरथे[21] साधुवर्गे[22] सुतीर्थे[23] ।

---

१. स्वस्यानयनार्थमागतैरभिमुखीकृत्य । २. मुनिजनेषु गण्याः ये तैरित्यर्थः । ३. आराधितः । ४. अतिथीनां प्रत्युद्गमनाय यत्र यत्र ये ये संप्रदायाः सुविदितास्तैरित्यर्थः । विशेषतः राज्ञः प्रत्युद्गमाय संप्रदायविशेषा अपि वर्तन्तेताननुसृत्येत्याकूतम् । ५. ज्ञातसंप्रदायः । ६. बद्धाञ्जलिपुटस्सन् । ७. भक्तियुक्तः । ८. जपे परा आसक्ता धीर्यस्य तम् । ९. सविश्वासम् । १०. सम्यक् साष्टाङ्गपूर्वं नमस्कृत्य, "उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग उच्यते" इति संप्रदायविदामुक्तिः । ११. राजयोग्ये । १२. सुखासने । १३. आसनमुपवेशः (प्रकरणार्थः,) तदर्थम् । १४. सूचयित्वा । १५. सुखागमनम् । १६. अपेक्षितवान् । १७. राजकुटुम्बे-राजकीयप्रधानसचिवादिजनेषु वा । १८. चतुरङ्गबलयुतसेनायाम् । १९. स्वस्य राज्ये । २०. आयव्ययविचारे । २१. सैन्ये इति सामान्येन यदुक्तं तदेव विशेषमुखादत्रप्रश्नितमित्युक्ते पौनरुक्त्यदोषो न संभवति । अथवा सैन्ये इति चतुरङ्गबलविचार एव भवतु तदायं देशे विद्यमानेतरगजहयरथक्षेमविषयकः प्रश्नः भवति । २२, यतिजनेषु । २३. स्नानाद्यर्थं विद्यमाने कल्पिते वा जलाश्रये ।

क्षेमं[1] सर्वं[2] मुनिकृततपोगौरवात्स्वस्य राज्ये
किं वाऽपेक्ष्यं[3] भवति[4] कुशले[5] जाग्रतीत्याह[6] तं सः ॥३४॥
पप्रच्छामुं[7] भवुकमुटजे[8] स्वाश्रमावासितेषु[10]
श्रौते[11] तीर्थे[12] तपसि[13] च जपे[14] शिष्यवर्गे[15] समाधौ[16] ।
राजन्वान्[17] यद्भवति[18] विदितो देश एष[19] प्रभुत्वा-[20]
त्सर्वं[9] भव्यं[21] भवति भवतो गौरवादत्र[22] राजन्[23] ॥३५॥

---

१. कुशलम् । २. भवदार्जिततपोविशेषेणेति गौरवोक्तिः । ३. आकांक्षितुं योग्यम् । ४. वसिष्ठे । ५. योगक्षेमविचारे । ६. जागरूके सति । ७. वसिष्ठम् । ८. कुशलम् । ९. पर्णशाला-गृहेषु । १०. आश्रमे वसत्सु जनेषु । ११. निरन्तरं प्रचलित-यागकार्येषु (अत्र श्रौते इत्यस्य श्रौतकर्मणि इति अर्थोऽभिधेयः । ) १२. तटिन्यादिपवित्रजलाशयेषु । १३. वसिष्ठकृततपोविशेषे । १४. तेनैवाऽसकृदादृतजपकर्मसु । १५. अध्ययनशीलानां शुश्रूषा-पराणां शिष्यजनानां समूहे । १६. सवितर्कनिर्वितर्कादिरूपसमाधि-विशेषेषु । १७. यस्मिन् देशे राजा प्रजाः सुखेन पालयति स सुराज-देशः राजन्वानिति कथ्यते । १८. यत यस्मात्कारणात् । १९. मम निवासार्होऽयं देश इति एतदा निर्देशः। २०. प्रभोः राज्ञः संभावित-कर्मविशेषव्याजात् । २१. क्षेमम् । २२. भवतः कीर्तिश्रवणद्वारा भवद्राज्यं भवान् सम्यक् परिपालयतीति श्रुत्वा अस्मद्देशप्रभुश्चामुं देशं सम्यक् परिपालयति - अतः भवान् राज्यपरिपालने आदर्शप्राय इति विश्वामित्रप्रशंसोक्तिः । २३. विश्वामित्रस्य संबोधनम् ।

आसेव्यासौ[1] फलजलपयस्संभृतां[2] सत्सपर्यां[3]
स्वीयं देशं जिगमिषुरभूत्[4] तं[5] तदाऽयं[6] बभाषे।
स्वीकार्या[7] मे भवतु भवता पारणा[8] स्नेहपूर्णा[9]
स्वेष्टं देशं प्रति तु भवता गम्यतां[10] श्वः प्रभाते[11] ॥३६॥

विश्वामित्रस्य मुनिमवदन्नेष्यते[12] पारणा मे
क्षंतव्योऽहं[13] सपदि[14] भवतोऽतर्पयन्मां सपर्या।
अस्मिन्नेवं वदति नृपतिं पारणायै ययाचे[15]
स्निग्धो भावः[16] प्रतिहतबलो[17]ऽप्याश्रयं[18] नो जहाति॥३७॥

विश्वामित्रो नयविनयवान् पूर्णभावं[19] वसिष्ठं

---

१. सेवित्वा-स्वीकृत्येत्यर्थः। २. फलाहारार्थं फलैः जलेन पयसा च संपादिताम्। ३. उपहाररूपां सत्कृतिम्। ४. गन्तुमिच्छुः। ५. विश्वामित्रम्। ६. वसिष्ठः। ७. अङ्गीकार्या। ८. अभ्यवहारः- भोजनमिति यावत्। ९. स्नेहपूर्वकं कृते (पारणे)ति यावत्। १०. भावे प्रयोगः। ११ उदयात्पूर्वम्। १२. अहमद्य पारणार्थमत्र स्थातुं नेच्छामीत्यर्थः। १३. क्षम्यै अहम्। १४. इदानीं भवत्संबन्धिनी सपर्या मामतर्पयदित्युपचारोक्तिः। १५. प्रार्थयतेत्यर्थः। १६. संकल्पकृतप्रयत्नः। १७. केनापि कारणेन प्रतिबद्धबलोऽपि। १८. स्वेष्टाश्रयभूतं संकल्पम्। दृढसंकल्पवान् तत्सिद्धिपर्यंतं प्रयतमान एव वर्तते। स्वसंकल्पं कथंचिदपि न त्यजतीति भावः। १९. पूर्णः मनःपूर्वकः भावः अभिप्रायः यस्य तम्।

संभा[1]व्यारात्प्रियकृत[2]बलिं सोऽनुमेने ग्रहीतुम् ।
सान्निध्याप्तं[3] विहितमशनं चाप[4]लाद्वर्जयित्वा
तल्लाभार्थं[5] दिशि दिशि चरेन्मूढ[6]धीर्बालिशो[7] वा ॥३८॥

विश्वामित्रं तदनुगर्जनं पारणायै नियुक्तं[9]
सैन्यं सर्वं[8] चतुरधिकृतं[10] विश्ववेत्ता[11] वसिष्ठः ।
कार्ये[12] दक्षां सुरभिमधुना सोऽब्रवीत्संभर[13] त्वं
तत्सृष्टा[14] साऽद्भुत[15]सुकरणा पारणाऽऽसीत्सुपूर्णा[16] ॥३९॥

तुष्टो[17] राजा स मुनिमवद[18]द्भो ऋषे दीयतां[19] मे
वांछा[20]दोग्ध्री सु[21]रभिसुरभिर्दिव्यरत्नं[22] जगत्याम् ।

---

१. गौरवदृष्ट्या वीक्ष्य ( तद्वचनमादृत्येति भावः । ) २. सुहृदर्पितां पारणाम् । ३. सान्निध्यं प्रापितं सन्निहितमिति यावत् । ४. अन्यत्र भोजनमितोऽप्यधिकतृप्तिकरं भविष्यतीत्युपेक्षया । ५. तदशनमेवाऽधिगन्तुम् । ६. मुग्धः । ७. विवेकशून्यो वा ८. तत्परिवारमिति यावत् । ९. निमंत्रितम् । १०. चतुर्भिः गजतुरगरथपदातिभिः अधिष्ठितम् । ११. सर्ववित् । १२. सकल-कार्यनिर्वहणक्षमाम् । १३. सम्यगभ्यवहारेणाऽराधयेति । १४. कामधेन्वा निर्मिता । १५. आश्चर्यकराणि करणानि पात्रपदार्थादीनि यस्यां सा । १६. संपूर्णेति यावत् । १७. अद्भुतपारणया संतुष्टः । १८. प्रार्थयत । १९. मदायत्ता क्रियताम् । २०. कामधुक् । २१. सुगन्धवती मनोहरा कामधेनुः । २२. देवलोकयोग्यं रत्नम् ।

योग्यं[1] राज्ञो निकटवसतेः[2] "पार्थिवो[3] रत्नहारी"
तन्मे[4] प्रीत्या[5] वितरतु[6] भवानर्थिनामिष्टदायिन्[7] ॥४०॥
श्रुत्वा वाचं[9] श्रवणकटुकामभ्यधात्तं[10] वसिष्ठो
दैवीयं[11] मे सुरभिशबला[12] यज्ञरक्षार्थमत्र[13] ।

---

१. न्याय्यम्-युक्तमिति यावत् । २. समीपस्थितेः- समीपे स्थापयितुमिति तात्पर्यम् । ३. "रत्नहारी तु पार्थिवः" इत्यभिजनोक्तिः । रत्नार्थस्तु "जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते" इति । दिव्यरत्नसदृशी इयं सुरभिः राजपदस्थस्य मम निकटे भवेच्चेत् तदा तस्याः अधिकतरं प्राशस्त्यं तथा राज्ञः प्रजानामतिथीनां च बहुतरप्रयोजनं भवतीति हेतोः भवान् तां मह्यं प्रददात्वित्यभिसंधिः । ४, तस्मात् कारणात् । ५. सुमनसा न तु निर्बन्धेनेत्यभिप्रायः । ६. ददातु । अत्र भवद्योगे न मध्यम इति प्रथमपुरुषैकवचने क्रियाप्रयोगः । ७. अभ्यर्थिनाम्-याचकानामिति यावत् । अत्र "याच्ञा मोघा वरमधिगुणे" इति न मम अभ्यर्थना निष्फला भवेदिति शंके यतः भवान् अर्थिनाम् । ८. इष्टार्थान् नियतं ददातीति लोकप्रसिद्धिरिति सामसंविधानोक्तिरत्र संबोधनेनाभिव्यज्यते । ९. विश्वामित्रस्य वचनम् । १०. आकर्णितुमयोग्याम् । ११. देवतासंबंधिनी । १२. सुरभिरिति शबलेति च व्यवहृता कामधेनुः-मनोहारित्वात्तस्यास्सुरभिरिति चित्रवर्णोपेतत्वाच्छबलेति व्यवहार इत्युन्नेतुमपि शक्यते । सुरभिः सुगन्धवती तथा चामरः "सुरभिर्घ्राणतर्पणः" इति । या सुगंधिः सा मनोहरा-सुगंधस्य मनोहरत्वं स्वाभाविकम् । १३. तत्पयसा निष्पन्नदध्याज्यादिभिर्हि यज्ञानां रक्षणम् ।

सर्वस्वं[1] मे भवति सुरभिर्जीवितं[2] विद्धि मे तां
प्रत्याचक्षे[3] सुरभिममलां दातुमार्य[4] प्रसीद[5] ॥४१॥
सोढुं[6] वाचं[7] प्रतिहततृषं[8] कामदृप्तो[9] न शक्त-
स्सामर्थ्या[10]त्तां गज[11] इव लतां कामधेनुं चकर्ष ।
सैषा[12] बाधां[13] परिजनकृतां[14] सोढुमार्ता[15]ऽसहिष्णु[16]-
स्तद्गोप्तारं[17] शरण[18]मगम[19]त्तं कृतिज्ञं[20] वसिष्ठम् ॥४२॥
क्रोधाविष्ट[21]स्सुरभि[22]मादिशत्स्रष्टुमाश्च[23]र्यसेनां

---

१. स्वमित्याकलयितुं यद्यच्छक्यं तत्सर्वम् । २. प्राणा एव-सुरभिसान्निध्यं विना मया जीवितुमपि न शक्यते इति प्रत्याख्याने प्रबलतमोऽयं हेतुः । ३. न ददामीति वच्मि । ४. हे पूज्य-आर्य-कुलोद्भव आर्येति संबोधनं साकूतम्-यतः यस्य मनः आर्यं निर्दुष्टं स आर्यः त्वमपि आर्यश्चेत् सुराभिमाहर्तुं न प्रयतस्वेति हृद्गताभि-प्रायः । ५. प्रसन्नो भव कोपं मा कुरु इति सांत्वनोक्तिः । ६. श्रोतुम् । ७. तिरस्कारोक्तिम् । ८. प्रतिहता-नाशिता - तृट् इच्छा यया ताम्-आशाभङ्गरूपामिति यावत् । ९. कामेन मत्तः इष्टार्थ-संपादनार्थमुद्रिक्तोत्साहो वा । १०. बलेन । ११. यथा मत्तगजः व्रततिं बलेनाकर्षति तथा । १२. सा सुरभिः । १३. पीडाम् । १४. विश्वा-मित्रस्यानुयायिभिरापादिताम् । १५. दीना । १६. अशक्ता । १७. स्वस्य रक्षकम् । १८. आश्रयम् । १९. प्राप । २०. कृति समये कर्तव्यं जानातीति कृतिज्ञः तम् । २१. कोपाभिनिविष्टः । २२. आज्ञापयामास । २३. विस्मयकरां सेनाम् ।

कांबोजाढ्यां[1] सयवन[2]शकां पप्लवा[3]ढ्यां विशिष्टाम्[4] ।
हत्वा सेनां श्रितनिज[5]बलाद्राज्ञि[6] दृप्ते[7] वसिष्ठं
प्राप्याऽत्रोचत्[8]सुरभिरभितो हन्यमानां[9] स्वसेनाम् ॥४३॥
संस्थाप्या[10]सौ[11] युधि[12] धुरि वरं[13] ब्रह्मदण्डं[14] वसिष्ठ-
स्सेनासृष्ट्यै सुरभिमवदत्पप्लवाद्याढ्य[15]जात्यै ।
[16]एवं चक्रे सुरभिरथ तां निग्रहीतुं ह्यशक्तो
विश्वामित्रा हतसुत[17]जनस्तापतप्तो[18] जगाम ॥४४॥
साक्षात्कर्तुं[19] हरमभयदं[20] [21]स्थैर्यमालम्ब्य भूप-

---

१. सुरभेः हुंभारवेण जाताः कालेन हिमवतो वायव्यदिशं प्रस्थिताः ये ते कांबोजाः तैर्युक्ताम् । २. यवनाश्च शकाश्च तैस्सह वर्तत इति ताम् । ३. इतरेभ्योऽङ्गेभ्यो जाताः पप्लवाः यवनाः शकाश्च ते सर्वे म्लेच्छजातिप्रविष्टा इति सामन्यतो वेदितव्यम् । ४, विशेषेण निर्मिताम् । ५. श्रितं निजं बलम् , इति विशेषणोभयपदकर्मधारयसमासः, तस्मात् । ६. विश्वामित्रे । ७. अहंकारयुक्ते सति । ८.व्यजिज्ञपत किमिति (स्वसेनाम्) हन्यमानाम्, उत्तरविशेषणमेतत् । ९, मम सेना हन्यते इति तात्पर्यम् । १०. स्थापयित्वा । ११. वसिष्ठः । १२. युद्धाग्रे । १३. श्रेष्ठम् । १४. इन्द्रस्य वज्रं हरेश्चक्रं हरस्य शूलं यथा तथा वसिष्ठस्य ब्रह्मदण्डः मुख्यायुधस्थानीयः तम् । १५. पप्लवा एव आद्याः येषां तैः आढ्या सान्द्रा जातिर्यस्याः तस्यै । १६. तथाकरोत्-असृजदित्यर्थः । १७. विश्वामित्रस्य सुताश्च तत्सेनया हता इति तात्पर्यम् । १८. संतापेन व्याकुलमानसः । १९. प्रत्यक्षीकर्तुम् । २०. वरदमिति यावत् । २१. मनस्थैर्यम्-समाहितस्सन् इत्यर्थः ।

स्तेने सद्यः प्रतिभय[1]तपो दारुणं[2] दीर्घकालम् ।
साक्षाद्भूय स्तुतवर[3]मदाद्धूर्जटि[4]स्सोऽथ राज्ञे[5]
तद्दत्तास्त्रप्रकर[6]सहितो योद्धुकामो[7] जगाम ॥४५॥
आग्नेयादीन्[8] वरकृतबलानस्त्रभारान्[9]प्रयुज्य
व्यर्थोद्योगः[10] समभवदयं ब्रह्मदण्डप्रभावात्[11] ।
तद्ब्रह्मास्त्रं परबलहरं[12] ग्रस्तमासीत्[13]प्रयुक्तं
राहोर्वक्त्रे[14] रविरिव[15] तदा ब्रह्मदण्डे प्रचण्डे[16] ॥४६॥
निध्यायायं[17] सुनिहतबलं[18] क्षत्रतेजः[19] कनीयो[20]

---

१. लोकानां भयजनकम् । २. उग्रम् । यद्यपि प्रतिभयम्, "दारुणम्" इति पदद्वयप्रयोगः पौनरुक्त्यापादक इति स्थूलदृष्ट्या प्रतिभाति, विचार्यमाणे तयोरस्त्यर्थभेदः, यथा भयानकरसः रौद्ररसः इत्येतयोर्भेदोऽस्ति तथैव । भयानकरसः रौद्ररसजनित इति केचित् । बहुना किम्, भयकरणे पदार्थप्रत्यक्षताऽनैकांतिका रौद्रभावे त्वैकांतिका उत्तरः स्वनिष्ठधर्मः पूर्वस्त्वन्यनिष्ठधर्मः । ३. प्रशस्तं वरम् । ४. ईश्वरः। ५. विश्वामित्राय । ६. महादेवादधिगतशरततियुतस्सन् । ७. योद्धुम् । ८. आदिशब्देन वारुणरौद्रैन्द्रपाशुपतादीनामुपलक्षणं भवति । ९. बाणजालम् । १०. निष्प्रयोजनयत्नः । ११. ब्रह्मदण्ड-शक्त्या । १२. शत्रुसैन्यनाशकम् । १३. गिलितम् । १४. छाया-भूतग्रहमुखे । १५. सूर्य इव । १६. प्रकृष्टबलयुक्ते अपराजिते इत्यर्थः । ७१. वीक्ष्य-आलोच्य । १८. सम्यङ्नाशितं च तत् बलं च (सैन्यम् ।) १९. क्षत्रियबलम् । २०. निकृष्टम् ।

मेने भूपस्स्वमनसि तदा ब्रह्मतेजो[1] बलीयः ।
तस्मादाप्यं[2] सुकृततपसा[3] शीघ्रमग्रो[4] नृपाणां
तद् ब्राह्मण्यं सपदि हि मयेत्येष ह्या निश्चिकाय[6] ॥४७॥
ब्राह्मण्यं तत्सात्विकं धर्ममाहुः क्षात्रं त्वेतद्राजसं धर्ममेव ।
तस्मात्पूर्वं[11] ह्युत्तरस्माद्बलीयो[12][13] विश्वामित्रो निर्जितोऽतो[14] वसिष्ठात् ॥

इति श्रीवेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके विश्वामित्रोदन्तकाव्ये राजपराजयो नाम प्रथमस्सर्गः ।

---

१. ब्रह्मतेजस्तूत्कृष्टम् । २. प्राप्तव्यम् । ३. सम्यक् फलप्राप्तिपर्यन्तं साधितं यत्तपः तेन । ४. अचिरात् । ५. ब्रह्मणे हितं ब्रह्मण्यम्-तदेव ब्राह्मण्यम् अथवा ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यम् । अत्र तच्छब्दप्रयोगः न व्यर्थः । यस्य ब्राह्मणस्य बलेन सर्वमपि विश्वामित्रबलं नष्टमभूदिति अनुभवेन विदितमहत्त्वं द्योतयितुं तदिति निर्देशः । ६. निश्चितवान् । ७. तच्छब्दप्रयोजनमुपरि दर्शितम् । ८. सत्वजन्यं सात्विककर्मप्रधानम् । ९. एतदिति नैच्यानुसंधानेन प्रदर्शितम् । १०. रजोगुणप्रधानम् । ११. ब्राह्मण्यम् । १२. क्षात्रात् । १३. प्रबलतरमिति यावत् । १४. पराजितः । अस्मिन् सर्गे महात्मनामुदयेन लोकक्षेमम्- राज्यपरिपालनधर्माः- अतिथिसत्कारविधानम्- उत्कृष्टवस्तुप्रभावः- तत्प्राप्तीच्छा-ब्राह्मण्यप्रशंसा-धर्मविजयः- अधर्मपराजयश्चेत्येते विषयाः बुद्धिगोचरा भवंति । तत्स्वरूपावबोधनेन हानोपादानगृहीतधर्माः उपदिष्टा भवंति । अंतिमपद्यं शालिनीवृत्तनिबद्धम् । तल्लक्षणं "शालिन्युक्ता म्तौ तगौ गोब्धिलोकैः" इति । इति श्रीवेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके विश्वामित्रचरितकाव्ये ब्रह्मतेजःप्रभावनामप्रथमसर्गस्य गंभीरपदार्थबोधिन्याख्या व्याख्या समाप्ता ।

# द्वितीयस्सर्गः

---

इष्टमित्रपरिवार[1]विसृष्टो दक्षिणां दिशमवाप्य धरेशः[2] ।
उग्रमादृत[3]तपास्तुतविश्वामित्र एष हि ततापे[4] महात्मा ॥१॥
तत्र तस्य समये[5] बहुपुत्रा जज्ञिरेऽतिकुशला[6]स्स्वमहिष्याम्[7] ।
तेन तस्य न बभूव सुखाशा[8] स्वेष्टसिद्धि[9]कलने विहिताशा[10] ॥२॥
वीक्ष्य दारुणतपांसि तदीयान्यागतो वरमदात्खलु धाता[11] ।

---

अस्मिन् सर्गे अन्तिमपद्यं विना तदितरपद्यानि स्वागतावृत्त-निबद्धानि । तल्लक्षणम् - "स्वागतेतिरनभाद्गुरुयुग्मम्" इति । १. इष्टान्-बन्धून्, मित्राणि-सुहृदः, परिवारान् - सेवकजनान्, विसृज्येत्यभिप्रायः । २. विश्वामित्रः । ३. अङ्गीकृततपाः । ४. तपधातोर्लिटि रूपम् । ५. योग्यकाले । ६. अतिकुशला भवितुं योग्या इत्यभिसंधिः । ७. महिष्या सहैव तपसे जगामेति वाल्मीकिरामायणे प्रमाणमस्ति तस्मात्स्वमहिष्याम् इति प्रयोगः समुचितः । ८. बहुपुत्रजननेनैव तस्य सुखं भवतीत्याशा नोत्पन्ना । ९. स्वस्य यदिष्टं तस्य सिद्धिः कदा भवेदिति चिन्तनेनेत्यग्रे वक्ष्यते । १०. तस्य आशा विहिता-निक्षिप्ता; अथवा, विहिताशा-मनसि कृताशा स्वेष्टसिद्धिकलने वर्तते, कदा मे इष्टसिद्धिः परिणता भवेदिति चिंतने निषक्ता भवतीति सामान्योक्तिः । ११. ब्रह्मा ।

त्वं हि राजऋषिरित्यमुमाह[1] प्रीतिदं[2] न तदभूल्लघुभूतम्[3] ॥३॥
भूय एव तपसा स महात्मा सुस्थितो[4] नियमतश्चिरकालात्[5][6] ।
प्रार्थितं[7] यदि भवेन्न हि सिद्धं[8] न त्यजन्ति सुधियः[9] श्रितकार्यम्[10] ॥
सूर्यवंशजनृपेषु[11] विशिष्टस्स[12] त्रिशङ्कुरिति भूपतिरासीत् ।
स्वर्गमाप्तुमनघं[13] सशरीरं यज्ञसाधनमियेष[14] तदानीम्[15] ॥५॥
प्राणमत्[16] कुलगुरुं स वसिष्ठं याजयेति[17] हि मनोरथपूर्णम्[18] ।
नान्वमन्यत[19] विधिं[20] स वसिष्ठो रोचते[21] न सुधिये[22] यदधर्म्यम्[23] ॥६॥

---

१. "ऋत्यकः" इति पाणिनिसूत्रेण राजा चासौ ऋषिश्च राजऋषिः राजर्षिरिति रूपद्वयम् । २. श्रैष्ठ्यम्-प्रतिष्ठा वा तद् ब्रह्मवचनम् । ३. किं तु अतिलज्जैवाऽभूदित्यभिप्रायः मंत्रिपदमारोढुमिच्छोः गणकलेखकत्वप्राप्तिः लज्जावहैव । ४. सु-सम्यक् बाह्यव्यापारप्रक्षोभं विना स्थितः-तपश्चकार इति यावत् । ५. विषयचापल्यं परित्यज्य जितेन्द्रियस्सन् । ६. बहुकालात् । ७. अपेक्षितं कार्यम् । ८. न कलितं चेत् । ९. बुद्धिमंतः । १०. अङ्गीकृतकार्यम् । ११. सूर्यवंशजराजेषु । १२. प्रसिद्धः । १३. सशरीरम् अनघं स्वर्गमाप्तुकामः तदानीं यज्ञसाधनं इयेषेत्यन्वयः । १४. इच्छामकरोत । १५. यदा विश्वामित्रः तपसि स्थितः तदेत्यभिप्रायः । १६. प्रपूर्वक "नम" धातोर्लङि रूपम् । १७. मया यज्ञं कारय । १८. मनोरथः पूर्णः यस्मिन् कर्मणि तद्यथा भवति तथेति क्रियाविशेषणार्थस्य याजयेत्यत्र प्रतीयमानक्रियायामन्वयः । १९. नाङ्गीकृतवान् । २०. सशरीरस्वर्गप्राप्तिदायकं विधानम् । २१. इष्टं भवति । २२. विदुषे । २३. यत् शास्त्रसंप्रदायविरुद्धं तदधर्म्यम् ।

तेन[1] धिक्कृत[2]धरापतिरारा[3]दास्थितान् तपसि[4] तस्य[5] सुपुत्रान् ।
तत्कृते[6] बहुतरं[7] स ययाचे[8] तेऽपि तद्वदवदन्[9]पितृभक्ताः[10] ॥७॥
यूयमप्यहह[11] मे न सहाया[12]स्सा मति[13]र्गुरुतरा[14] गुरुनिष्ठा[15] ।
एवमाह स नृपः परिहासा[16]त्तेन[17] शप्त इह चण्डभुगासीत्[18] ॥८॥
जाति[19]चण्डभुगिवायमिलायां नील[20]वर्णकृतदेहविकारः ।
सत्य[21]धर्ममहितोऽपि स शापाद्धीन[22]जातिवद[23]वाप निकारम्[24] ॥९॥
दुष्करं[25] किल मनोरथ[26]मापुं याजकं[27] स न परं भुवि मेने ।

---

१. वसिष्ठेन । २. निराकृतः त्रिशङ्कुः । ३. समीपे । ४. तपसि व्यापृतान् । ५. वसिष्ठस्य योग्यान् पुत्रान् । ६. याजनाय । ७. अनेकप्रकारेण । ८. ययाचे इति लिटि रूपम् । ९. नाङ्गी चक्रुरिति तात्पर्यम् । १०. अत एव पितृमार्गानुयायिनः पितरि भक्तियुक्ता इति विशेषणम् । ११. अहह इति परिहास्यव्यंजकोऽयं निपातः । १२. मम साहाय्यं कर्तुं नान्वमोदध्वमिति भावः । १३. तिरस्कारबुद्धिः । १४. अधिकतरा । १५. गुरौ पितरि वसिष्ठे निष्ठा सङ्गता । १६. हास्यभावेन । १७. तेन कृतपरिहासकारणेन । १८. चण्डालः-चण्डं-मांसं भुङ्क्ते इति चण्डभुक् । १९. जातिचण्डाल इव-चण्डालपदस्थाने चण्डभुक्पदप्रयोगश्छन्दस्सौकर्याय । २०. प्रायशः चण्डालाः नीलवर्णरूपिणः-केचित्तदन्यवर्णा अपि । ग्रामाद्बहिःप्रदेशेषु अरण्येषु वा सततं आतपशुष्काः नीलवर्णा भवन्ति । २१. सत्यं च धर्मश्च सत्यधर्मौ ताभ्यां प्रथितोऽपि । २२. शूद्रादिवत् । २३. प्राप । २४. धिक्कारम् । २५. कष्टसाध्यम् । २६. सशरीरस्वर्गप्राप्तिम् । २७. यः यजते स याजी यः याजयति स याजकः णिचि रूपम् ।

दैवयोगमहिमा[1] परमास्ते[2] गाधिसूनुम्[3]अचिरात्स ददर्श ॥१०॥

तत्समीपमयमागत[4] एव स्वस्थ[5] आस परिवर्धिततोषः[6] ।
भाविकार्यफलसूचनम्[7]अत्र स्वास्थ्यम्[8]आशयगतौ[9] कथयेन्[10]नः[11] ॥११॥

गाधिनन्दनकृपापरिशुद्धः[12] स्वस्य वृत्तम्[13]अखिलं व्यवृणोत्[14]सः ।
सोऽददात्स्वभयहस्तम्[15]अथास्मै[16] यज्ञसाधनविधिं[17] ह्यनुमेने[18] ॥१२॥

सत्यमार्गचरतो[19]ऽत्र कथंचिद्दुःखकारि[20] बहुधा परिबद्धम् ।
प्रत्यवायनिकुरम्बकम्[21]आरात्[22]साधुसङ्गवशतः[23] परिधावेत्[24] ॥१३॥

---

१. विधिकॢप्तिः । २. मुख्यमिति यावत् क्रियाविशेषणमिदम् । ३. विश्वामित्रम् । ४. आगतस्सन् । ५. निश्चिन्तः । ६. अत एव अस्य तोषः-संतोषः परिवर्धितः अधिकोऽभूदित्यभिप्रायः । ७. उत्तरोत्तर-भाविकार्यसिद्धेः निमित्तं भवतीत्यर्थः । ८. स्वस्थचित्तता - निश्चिता स्थितिरिति यावत् । ९. स्वसंकल्पनिर्वहणमार्गे । १०. सूचयति । ११, नः इत्यस्मच्छब्दप्रयोगस्यात्र न स्वार्थे तात्पर्यं परन्तु सामान्यार्थे-सर्वेषामित्यभिप्रायः । १२. विश्वामित्रस्य करुणया शुद्धांतरंगस्सन् । १३. स्ववृत्तान्तम् । १४. सुविशदमकथयदित्यर्थः । १५. सुष्ठु अभयप्रदानसूचकं हस्तम्-मा भैषीरिति सूचिकां हस्तसंज्ञां वा । १६. त्रिशङ्कवे । १७. तेन यज्ञं कारयितुम् । १८. अन्वमोदत-अहं त्वया यज्ञं कारयिष्यामीत्यवदित्यर्थः । १९. सत्यमार्गावलम्बिनः । २०. व्यसनकृत् । २१. विघ्नपरंपरा । २१. समीपे । २३. साधूनां तपोनिष्ठानां सहवासयोगेन । १४. नश्यतीत्यर्थः ।

ऋत्विजो[1] मुनिगणानुपनेतुं[2] यज्ञसिद्धिकरणे[3] सुधुरीणान्[4] ।
कौशिको[5] निजसुतानतिशीघ्रं संदिदेश[6] नृपतेः[7] सहकारी[8] ॥१४॥
ते गता दिशि दिशि स्थिरबुध्या[9]ऽवेदयन्[10] पितृनिमंत्रणम्[11] एभ्यः[12] ।
गौरवात्कुशिकनन्दनवृत्तेः[13] मेनिरे तमनुगन्तुम्[14] उदाराः[15] ॥१५॥
आगता ऋषिजना नियमाप्ता[16] यज्ञवाटसविधे[17] ददृशुस्तम्[18] ।
अध्वरप्रवणं[19] कौशिकमेते क्षेमचिंतनपरा[20]स्समभूवन् ॥१६॥

---

१. षोडश याज्ञिकान्, । होतृवर्गः अध्वर्युवर्गः- उद्गातृवर्गः- ब्रह्मवर्गश्चेति चतुर्वर्गप्रविष्टास्ते। प्रतिवर्गमपि चत्वारः ऋत्विजो भवन्ति। तेषां नामानि कर्माणि च अन्यत्र वैदिकग्रन्थेषु विहितानि भवन्ति । २. आनेतुं अत्रान्तर्भावितणिचि प्रयोगः । ३. यज्ञस्य सिद्धिमापादयितुं-यज्ञफलप्रापणकार्ये इत्यर्थः । ४. समर्थान् । ५. विश्वामित्रः । ६. आज्ञापयामास । ७. त्रिशङ्कोः । ८. सहायकः । ९. स्तिमितमानसाः । १०. विज्ञापितवन्तः- विदधातोः णिचि लङि प्रथमपुरुषबहुवचनरूपम् । ११, स्वपितुस्सकाशादाह्वानम् । १२. ऋषिभ्यः । १३. विश्वामित्रः यद्यत्कर्तुमिच्छति तत्तत्साधयतीति गौरवात्- अथवा-अयं सुलभकोपः, अस्याह्वानतिरस्कारे महाननर्थस्संभवेत् , तत्तद्वचनं संभावयितुमुचितमिति बुध्या । १४. अनुप्राप्तुम् । १५. सुमनस इति यावत् । १६. नियमैः युक्ताः । १७. यज्ञशालायास्समीपे । १८. विश्वामित्रम् । १९. यागादिषु ये आसक्ताः तेषु प्रधानः विश्वामित्र इत्यभिप्रायः । २०. परस्परयोगक्षेमे व्यापृताः ।

तत्सुता ह्यकथयन्[1] निजपित्रे[2]ऽनागमं बत[3] वसिष्ठसुतानाम् ।
ये निनिन्दु[4]रिह यज्ञविधानं[5] स्वर्गयानफलदं[6] तदसाध्यम् ॥१७॥
तन्निशम्य[7] स पिता[8] बहुरुष्टो[9] भस्मसाद्भवत[10] यूयमनार्याः[11] ।
इत्यसौ बत शशाप सुतांस्तान् दुर्भगान्[12] किल[13] वसिष्ठमहर्षेः ॥१८॥
आरभन्त[14] ऋषयो हितयज्ञं[15] प्रारभन्त[16] सुजनाः[17] परिवेष्टुम्[18] ।
अद्भुतं[19] बहुजनाः परियान्ति[20] प्रेक्षितुं कुतुकिनो[21] हि जगत्याम् ॥१९॥

---

१. विश्वामित्रस्य पुत्राः । २. विश्वामित्राय । ३. बतेति खेदे - तेषामनागमात् अनिरीक्षिता काचिदापत्संभवेदिति संभावनया खेदप्रदर्शनम् । ४. निन्दां चक्रुः । इह असाध्यं स्वर्गप्राप्तिफलदं तद्यज्ञविधानं ये निनिन्दुरित्यन्वयः । ५. यज्ञप्रकारान् । ६. स्वर्गप्राप्तिकरमिति यावत् । ७. तेषां निन्दावचनम् । ८. विश्वामित्रः । ९. अत्यन्तकोपाविष्टस्सन् । १०. भस्मीभूताः । ११. आर्यमार्गाऽऽतिलङ्घिनः । १२. हतदैवान् १३. किलेति निश्चयार्थे निपातः । १४. रभधातोः लङात्मनेपदि रूपम् प्रारेभिरे इत्यर्थः । १५. हितश्चासौ यज्ञश्च तं स्वेष्टप्राप्तिकरयज्ञमिति यावत् । १६. तदैवास्तिकजनाः यज्ञं द्रष्टुं यज्ञशालां प्रवेष्टुमपि प्रारेभिरे इति तात्पर्यम् । १७. दुर्जनाः यज्ञविघातकाः- सुजनास्तु यज्ञस्य प्रेक्षका इत्याकूतम् । १८. परितः नानादिग्भ्यः प्रवेशं कर्तुं "अनाहूतोऽध्वरं गच्छे"दिति न्यायमनुसृत्य आस्तिकजनाः यज्ञमहोत्सवमनुवीक्षितुं सर्वतस्समागता इति भावः । १९. आश्चर्यकरं यत्तत्प्रेक्षितुम् इत्यन्वयः । २०. सर्वतस्समागता इति भावः । २१. सकौतुकाः ।

दीक्षितो[1] विधिकृतान्नियमांस्तान्[2] स त्रिशङ्कुनृपतिः परिषेवे[3] ।
सन्मतिर्महति[4] यस्सति लाभे किंचिदत्र गणयेन्न[5] हि कष्टम् ॥२०॥
आह्वयत्[6] सुरगणान्[7] श्रुतिमन्त्रैः[8] भोजनाय हविषां[9] विहितानाम्[10] ।
गाधिनन्दननिमन्त्रणलुब्धा[11] देवता न हि बभूवुरशेषाः[12] ॥२१॥
तेन तप्तमतिराह[13] स भूपं नागतास्सुमनसः[14] परिभोक्तुम्[15] ।
स्वस्वभागमिह भोस्तव यज्ञे तावता भवति कापि न हानिः ॥२२॥
त्वं भयं त्यज[16] निजाशयबाधात्कौशिकोऽयमहमस्मि[17] तवार्थे[18] ।

---

१. दीक्षां (नियमविशेषान्) गृहीतवान्। २. यजमानेन कर्तव्य-नियमान् । ३. परिगृहीतवान्। ४. अत्र-महति लाभे सति सन्मतिः-यः, सः किंचिदपि कष्टं न गणयेदित्यन्वयः। सन्मतिः विवेकीति यावत्। ५. लक्षयेत् भावयेदिति यावत्। ६. प्रार्थयतेत्यर्थे। ७. देवताविशेषान्। ८. वेदमंत्रैः। ९. अग्नौ हुतानां अज्यादिद्रव्याणाम्। १०. विध्युक्तानाम्। ११. गाधिनन्दननिमंत्रणलुब्धाः न बभूवुरित्यर्थः। गाधिनंदनः विश्वामित्रः तेन कृतं निमंत्रणं हविरादानाय आह्वानं तस्मिन् लुब्धाः लोभपरीताः न बभूवुः-तस्याह्वानं नालक्षयन् नागता इति फलितार्थः। १२. अशेषाः देवताः सर्वाः- देवताः इत्यन्वयः। १३. क्रुद्धबुद्धिः । १४. देवताः- सुमनश्शब्दसाहचर्यात्तदनागमस्य विश्वामित्राह्वाने ते समीचीनमनसः नाभवन्निति यत् तदेव कारणमिति तात्पर्यमपि संभाव्यते। १५. यज्ञे हविर्भागान् स्वीकर्तुम्। १६. तव मनोरथस्य भंगस्समजनीति हेतोः यदि ते भयं भवति तत्त्यजेति भावः। १७. कुशिकगोत्रोत्पन्नोऽहम्। कौशिकाः स्वैरारब्धकार्यमंतरायसहस्रेण प्रतिहता अपि साधयंत्येवेत्याकूतम्। १८. तवाभीष्टं संपादयितुं कृतप्रतिज्ञोऽस्मीत्यभिप्रायः।

मत्कृतस्य[1] तपसो बलतस्त्वं याहि नाकमिदमेव[2] नयेत्त्वाम्॥२३॥
अर्जितुं[3] हि तपसा किमसाध्यं साधयामि[4] तव मानसतर्षम्[5] ।
त्वं क्षणात्[6]सुरपुरं खलु पश्येर्याहि तत्तपसि मेऽस्ति बलं ते॥२४॥
एवमुक्तवति गाधितनूजे[9] स त्रिशंकुरुदगाद[10]भिनाकम्[11] ।
ऋत्विगादि[12]निखिला ददृशुस्तं स्वर्गगामिनमहो[13] सुविचित्रम्[14] ॥
तुष्टुवुर्बहुविधं[15] स्तुतिसभ्याः[16] कौशिकं[17] कृततपोमहिमाढ्यम्[18] ।
ते भवन्ति कृतितो[19] बहुशस्ताः[20] ये दिशन्ति[21] महदद्भुतकार्यम्[22]॥२६॥

---

१. मयार्जितस्य । २. तपोबलमेव । ३. सम्पादयितुम् । ४. येन केन वा प्रकारेण निर्वर्तयामि । ५. तव मनोरथम् । ६. देवलोकम् । स्वर्गलोकमिति यावत् । ७. सुरपुरम् - स्वर्गम्, पूर्शब्दः रेफान्तस्त्रीलिंगःसः- समासे "ऋक्पूरब्धूःपथामानक्षे" इति सूत्रेण अकारांतो भवति अतः तदिति तस्य द्वितीयैकवचनमिदम् । ८. तव सशरीरस्वर्गगतिप्रदं बलं मम तपआयत्तमिति जानीहीत्याशयः । ९. विश्वामित्रे । १०. उदगच्छत् । ११. स्वर्गाभिमुखम् । १२. यज्ञशालायां स्थितास्सर्वे । १३. स्वर्गं प्रतिगच्छन्तम् । १३. विश्वामित्रतपोमहिम्ना त्रिशङ्कुनृपतिः सशरीरं स्वर्गं गच्छतीत्याश्चर्यं सूचयत्ययं निपातः । १४. इदं न कुत्रापि श्रुतं नापि दृष्टमित्यभिप्रायः । १५. अनेकधा । १६. प्रमुखाः सभासदः । १७. विश्वमित्रम् । १८. स्वार्जिततपोमहिमदीप्तम् । १९. स्वकार्येभ्यः- कृतिभ्य इत्यर्थे पञ्चम्यास्तसिल् । २०. बहुधा प्रशंसिताः । २१. प्रदर्शयंति । २२. अद्भुतं च तत् कार्यं चेति कर्मधारयसमासघटितमिदं वाक्यम् । असाधारणं-अतिविस्मयकरं कार्यमिति यावत् ।

स्वर्गविष्टनृपतिं दिवि दृष्ट्वा निर्जरा भयमवापुरशेषाः ।
पातयन्ति तमवाक्छिरसं हा ते त्रिशंकुममराः स्म दिवो हा ॥२७॥
हा हतोऽस्म्यभिपतामि महर्षे कौशिक स्वयमवेहि तवोक्तिम् ।
पाहि मां निरपराधमिहार्य त्वं ममाद्य वरदो हि शरण्यः ॥२८॥
क्रन्दनं नृपवरस्य तदित्थं वज्रपातमिव भूरि निशम्य ।
कौशिकोऽभवदहो बत रौद्रः कस्य कार्यहनने न हि कोपः ॥२९॥

---

१. स्वर्गं प्रविष्टं त्रिशंकुम् । २. दृष्ट्वा पश्यन्तः इति यावत् । ३. प्रापुः । ४. अशेषाः सर्वे देवाः । ५. पातयंति स्म-स्मातीते - अपातयन् इत्यर्थः । ६. अवाक् अधोमुखं शिरः यस्य तम् ।७. हेति महद्व्यसनं सूचयत्ययं निपातः । ८. हेति पुनः खेदसूचने अवाक्शिरस्त्वं हेतुः अवाक्छिराः स यदि पतति भूम्यां तच्छिर एव प्रथमं विस्फुटेदिति भयमेव कारणम् । ९. पतनान्म्रिये । १०. भूमिमभिपतामि । ११. हे विश्वामित्र । १२, जानीहि स्मरेति तात्पर्यम् । १३. तव समर्थवचनं "त्वं क्षणात्सुरपुरं खलु पश्येर्याहि तं तपसि मेऽस्ति बलं ते" इत्यादि । १४. निर्गतः अपराधः यस्मात्तम्, निर्दोषमिति यावत् । १५. प्राणदानरूपं वरं दातुं समर्थः । १६. अस्या आपदः मां त्रातुं योग्यः । १७. दीनदीनविलपनम् । १८. वज्रपातघोरश्रवणेन मनः यथा चकितं भवति तथाऽस्य क्रन्दनेन विश्वामित्रस्य चित्तं चकितमभूदिति तात्पर्यम् । १९, भयंकरः । स्वसमीहितकार्यस्य विघाते सति ।

गाधिसूनुरथ तं नु बभाषे तिष्ठ तिष्ठ दिवि भो मम भूत्या[1] ।
स्वर्गमन्य[2]महमत्र[3] सृजामि त्वत्कृते[4]ऽन्यविबुधान्[5] पति[6]मिन्द्रम्[7] ॥
कौशिकोक्तिबलतो[8] दिवि[9] तस्थौ[10] स त्रिशङ्कुनृपतिः कृतयज्ञः[11] ।
किं भवेदृषिवचोऽप्ययथार्थं[12] लोकवाक्यमिव[13] कार्यनिमित्तम्[14] ॥३१॥
दक्षिणा[15] दिवि परं[16] खलु सृष्टं सप्तकं सबहुभं[17] च ऋषीणाम् ।

---

१. मम तपःप्रभावेण । २. अन्यं स्वर्गं कल्पयामि । ३. यत्रान्तरिक्षे त्वं तिष्ठसि तत्रैवेति भावः । ४. हेतोः-शरणागतस्य कृतयज्ञस्य सत्यसंधस्य निरपराधस्य तव रक्षणार्थम् । ५. देवान् । ६. पतिम् - तेषां विबुधानां स्वामिनम् - मत्सृष्टस्वर्गस्याधिपतिम् । ७. अन्यमिन्द्रं सृजामीत्यध्याहारः । ८. विश्वामित्रस्य "भोस्तिष्ठ तिष्ठे"त्युक्तिबलेन । ९. अन्तरिक्षे । १०. स्थितवान् । ११. निर्वर्तितयागः । १२. सामान्यजनानां वचनं बहुशोऽयथार्थं भवेन्नाम कथम् ऋषिवचनमपि तथा भवेत् । न भवेदेव यथार्थमेव भवतीत्यभिप्रायः । १३. लौकिकानां वाक्यमिव । १४. उद्दिष्टकार्यं निमित्तीकृत्य कारणानि संभवासंभवगमकानि परिभाव्य यदुच्यते तल्लौकिकं वाक्यम् । १५. दक्षिणा-दक्षिणस्यां दिशि अदूरे दक्षिणा अव्ययमिदम्, दिवि-आकाशे । १६. अन्यत् - प्रतिकृतमिति यावत् । १७. बहूनि भानि ( नक्षत्राणि ) तैः सह वर्तते इति सबहुभं सप्तकमित्यस्य विशेषणम् - अनेकनक्षत्रसहितमित्यर्थः ।

स्थापितो[1]ऽत्र नरपो[2]ऽमरमध्ये[3] स त्रिशङ्कुरमरो[4]ऽद्य[5] चकास्ति[6] ॥
स्रष्टुमेवममरान् द्रुतमन्यान्[7]उत्सुकं मुनिवरं[8] सुसमीक्ष्य[9] ।
आगतास्सुरवरा विनयोक्त्या[10] कौशिकं सुतपसं[11] हितमूचुः[12] ॥३३॥
शापयुक्तनृपतिर्न[13] हि नाकं[14] गन्तुमर्हति[15] ततोऽस्य निपातः[16] ।
त्वं हि वेत्सि सकलं श्रुतिसिद्धं[17] तत्त्वमद्य[18] भव सृष्टिनिवृत्तः[19] ॥३४॥
कौशिक[20]स्सुरवचांसि[21] निशम्य श्रूयतां[22] सपदि भो मम वाक्यम्[23] ।

---

१. प्रतिष्ठापित इत्यर्थः। २. त्रिशङ्कुनृपतिः। ३. विश्वामित्रेण सृष्टानां देवविशेषाणां मध्ये। ४. देवत्वं प्राप्तः। ५. इदानीमपि। ६. नक्षत्ररूपेणान्तरिक्षे विभातीत्यर्थः। ७. अमरान् देवान्। ८. ऋषिश्रेष्ठं विश्वामित्रम्। ९. दृष्ट्वा। १०. समाधानकरवचनेन। ११. समीचीनं तपः यस्य तम्-तपःप्रभावशालिनमित्यर्थः। १२. अस्य सम्मतम् अनुकूलं चेति यावत्। १३. त्वं चण्डालो भवेति वसिष्ठपुत्रैर्यश्शापः दत्तः तेन युक्तोऽयं राजा। १४. स्वर्गलोकम्। १५. नार्हति-प्राप्तुमयोग्यः। १६. अतः अस्य स्वर्गान्निपातो जातः। १७. श्रुत्या यद्यदुक्तं तत्तत्सर्वं त्वं जानासीति प्रशंसापूर्वकं सांत्वनोक्तिः। १८. तत् त्वमिति पदच्छेदः तत्-तस्मादित्यर्थः। १९. प्रतिसर्गव्यापाराद्विमुखो भवेत्यर्थः-भवेति प्रर्थनायां लोट्। २०. विश्वामित्रः। २१. देवानां वाक्यानि अत्र कौशिकस्य समाधानकर्तारो वक्तारः देवाः बहवः तैः कृतसान्त्ववचनान्यनेकप्रकाराणीति कृत्वा सुरवचांसीति बहुवचनप्रयोगः। २२. सावधानमाकर्ण्यताम्। २३. भो देवाः मया यदुच्यते तत्प्रथमं शृणुतेत्याकूतम्।

स्वर्गवासविहित[1]शपथो[2] मे नान्यथा[3] भवितुमर्हति देवाः[4] ॥३५॥
तन्[5]मयाद्य निखिलं प्रतिसृष्टं[6] तिष्ठतु स्वयम[7]यं[8] भजतु द्याम् ।
स त्रिशङ्कुर[9]पि य. । वसेत्तं[10]स्वर्गलोक[11]समेव भवेद्धोः[12] ॥३६॥
अब्रवीदिति सुरान्[13] स महर्षि[14]स्तं च तेऽप्यनुनयै[15]रिदमूचुः[16] ।
एवमस्तु भवताद्य[17] यदुक्तं तेन लोकभद्रकं[18] बहु[19] भूयात् ॥३७॥
निर्जरास्त्रिदशलोकम[20]भीष्टं जग्मुराशु मुनयो[21]ऽप्यतितुष्टाः[22] ।

---

१. येन शपथेन स्वर्गे वासः अस्मै त्रिशङ्कुनृपाय विहितः ( कृतः ) तादृशशपथ इति यावत् २. प्रतिज्ञा । ३. विपरीतफलदः । ४. अत्र देवा इति संबोधनं देवत्वात् यूयमेव निग्रहानुग्रहकार्यसमर्था इति न मन्यध्वमिति साकूतवचनम् । ५. तस्मात् । ६. पृथङ्निर्मितम् । ७. त्रिशङ्कुः । ८. स्वर्गम्-मया निर्मितस्वर्गमित्यभिप्रायः । ९. अपिशब्दः तदिति पदेन योज्यः । १०. तदपि-यत्र त्रिशङ्कुः वसेत्ततत्स्थानमपि । ११. निसर्गस्वर्गतुल्यमेव । १२. भवितव्यमेवेति निर्धारणद्योतनार्थं विधिलिङि भूधातुप्रयोगः । १३. देवान् प्रति । १४. विश्वामित्रः । १५. सांत्ववचनैः । १६. वदंति स्म । १७. इदानीमेव । १८. लोकानां कल्याणम् । १९. अधिकम् । २०. हितमिति यावत् । २१. अपिशब्दबलात् ऋषयोऽपि स्वाभीष्टस्थानानि जग्मुरित्यपेक्षितपदाध्याहारेण अर्थो नेयः । २२. संतुष्टान्तरङ्गाः ।

इष्टम्[1]ईदृशम्[2]अपूर्वविशेषं[3] साधितं हि तपसा[4] बुधशस्तम्[5] ॥३८॥
कौशिकस्य सुयशो[6] विदितं[7] द्राक्[8] तत्त्रिशङ्कुचरितोदितम्[9]ईड्यम्[10]।
आदिदृष्टविषयो[11] विबुधेड्यो[12] व्यापृत[13]श्रुतिमुखात्[14]खलु लोके[15]॥३९॥
एवं धैर्यात्[16]स्वकृततपसा[17] स्वर्गसृष्टिं[18] स चक्रे

---

१. इष्टम् - यज्ञम् - ( इष - इच्छायाः-भावेऽक्त-प्रत्ययः । ) यज्ञार्थे इष्टपदप्रयोगः "इष्टापूर्ते" इत्यत्र दृष्टः । तत्र इष्टं च पूर्तं चेति विग्रहः । इष्टशब्दार्थश्च एवं प्रदर्शितः- "एकाग्निकर्महवनं त्रेतायां यच्चहूयते अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते" इति । २. विश्वामित्रतपःप्रभावनिर्वृत्तयज्ञसदृशम् । ३. पूर्वे (पूर्वस्मिन् काले) विशेषः- न विद्यते पूर्वविशेषः यस्य तं । अदृष्टपूर्वमिति यावत् । अथवा अपूर्वो नाम यज्ञसाधनजन्यः यजमानस्य जीवितमनुमरन् तस्य प्रायणेन स्वर्गप्राप्तिकरः कश्चिद्धर्मः- अपूर्वविशेषस्तु सशरीरस्वर्गप्राप्तिकर इति यावत् - तदुपलक्षितं तज्जनकं यज्ञमित्यभिप्रायः । ४. तपःप्रभावेण । ५. प्रशंसितम् । ६. सत्कीर्तिः । ७. विज्ञातम् । ८. तत्क्षणम् । ९. त्रिशंकुवृत्तान्तेनापादितम् । १०. स्तुत्यम् । ११. सृष्ट्यादौ ब्रह्मणा संकल्पितविषयः प्रथमतः यो विषयः येन केन वा दृष्टो भवति । १२. देवैः- विद्वद्भिश्च यः प्रशंसितः । १३. वंशपारंपर्येणाभ्यस्तः- प्रसिद्धिं नीतः । १४. वेदमूलात्-कर्णाकर्णिकया च । १५. जगति-जनेषु । १६. संप्राप्तान्तरायान् सर्वान्विनिहत्य धीरभावेन । १७. स्वेनार्जित-तपःप्रभावेण । १८. प्रतिसर्गनिर्माणम् ।

विश्वामित्रोऽमरयुतदिवि[1] स्थापयित्वा त्रिशङ्कुम् ।
लोके कीर्तिं दधदनुपमां[2] प्रीतिहेतुं सुराणां
ब्रह्मर्षित्वं स्वसुखबलदं[3] लब्धुकामो[4] बभूव ॥४०॥

इति श्रीवेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके विश्वामित्रकाव्ये त्रिशंकोस्स्वर्गप्राप्तिर्नाम द्वितीयस्सर्गः ।

---

१. अन्तरिक्षे । २. न विद्यते उपमा यस्यास्ताम्, सर्वोत्कृष्टामिति यावत् । ३. सर्वशक्तिप्रदम् । ४. प्राप्तुमनाः ।

अस्मिन् सर्गे पुरुषप्रयत्नादसाध्यसाधनम्-प्रतिज्ञापरिपालनम् आर्तरक्षणम् - दुष्टशासनमित्यादिधर्माः प्रतिपादिताः । अंतिमपद्यं मंदाक्रान्तावृत्तनिबद्धम् । तल्लक्षणम् "मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तो गुरू चेत् ।" इति ।

इति श्रीवेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके विश्वामित्रचरितकाव्ये त्रिशंकोस्स्वर्गप्राप्तिनामकद्वितीयसर्गस्य ग्रन्थकर्त्रा कृता गंभीरपदार्थबोधिन्याख्या व्याख्या समाप्ता ।

# तृतीयस्सर्गः

विश्वामित्रोदक्षिणस्यां[1] दिशीत्थं लब्ध्वा विघ्नान्[2] स्वस्वभीष्टे[3] तपोऽर्थे[4]
मेने क्षेमं पश्चिमायां दिशीड्यं[5] स्वास्थ्यं[6] नृणां पुष्करेषु[7] प्रसिद्धम्॥
सद्यो[8] गत्वा पुष्करान् तान् स देशान् विश्वश्रेष्ठं[9] पुष्कराख्यं सुतीर्थम्
क्षेत्रं वीक्ष्य स्वस्य चित्ते न्यबोधत्[10] प्राशस्त्यं मे स्यात्तपोनिष्ठया[11]ऽत्र॥
तत्र स्नात्वा[12] शुद्धचित्तेन[13] धीरो भूयो घोरा[14]माशु तेने तपस्याम्[15] ।
भीता देवा आगतास्ते तमूचू राजर्षे त्वं सत्वचेता[16]स्तपस्वी[17] ॥३॥

---

अत्र अंतिमपद्यं विना तदितरपद्यानि शालिनीवृत्तनिबद्धानि । तल्लक्षणम् ‘‘शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः’’ इति । १. दक्षिणस्यां दक्षिणायामिति रूपद्वयम् । २. अन्तरायान । ३. स्वस्य सम्यगभिप्रेते । ४. तप एव अर्थः प्रयोजनं तस्मिन् तपोरूपकार्ये वा । ५. हितकरम् । ६. शान्तचित्तता । ७. पुष्करदेशेषु । ८. तत्क्षणम् । ९. विश्वे-जगति, श्रेष्ठं पवित्रम् । १०. निपूर्वकबुधधातोः लङि रूपम् । ११. तपसि निष्ठा नितरां स्थितिः तया तपोनिर्वहणेनेति यावत् । १२. स्नानादिकर्माणि बाह्यशुद्धिसूचकानि । १३. अन्तश्शुद्धिस्तु कामादिदुर्गुणत्यागेन शांत्यादिसुगुणसंपादनेन च लभ्या । १४. भयंकराम् । १५. तपोव्रतमिति यावत् । १६. सत्वप्रधानं चेतः यस्य सः । सत्वोत्कर्षेण तपश्शक्तिरभिवर्धते किल । १७. तपः अस्यास्तीति - अथवा ‘‘सत्यं तपः’’ इत्युक्तत्वात् सत्यवान् - सत्यसंध इति यावत ।

तेषु ब्रह्मोवाच तं भो ऋषिस्त्वं[1] कार्यैश्श्लाघ्यैस्[2]साधितोऽयं ह्युपाधिः[3] ।
देवं सोऽयं पूर्णभावात्[4]प्रणम्य स्वेष्टं तस्मै प्राह धात्रे[5]ऽतिनम्रः ॥४॥
राजर्षिर्वा भो ऋषिर्वा भवेयं तेन श्लाघा[6] कापि[7] मे नास्ति लोके ।
तस्मात्तप्तुं तत्तपो[8] निश्चयो मे ब्रह्मर्षित्वं येन[9] मे प्रापितं[10] स्यात् ॥
विघ्नं कर्तुं तस्य भूयस्समाधेर्[11]देवैर्[12]आशु प्रेरिता[13] मेनका[14] सा[15] ।
अप्सु स्नानाद्[16]भासमानाप्सरस्त्रीं[17] दृष्ट्वा रागान्[18]मोहितोऽयं[19] कदाचित्

---

१. त्वं ऋषिरसि । २. देवादिभिः प्रशंसितैः । ३. ऋषिरिति प्राशस्त्यम् । ४. श्रद्धाभक्तिसहितमिति तात्पर्यम् । ५. ब्रह्मणे । ६. प्राशस्त्यम् । ७. किंचिदपीति भावः । स्वर्गारोहणेच्छोः खट्वारोहणवत् ब्रह्मर्षित्वमिच्छोः मम ऋषिरित्युपाधिरपि न तृप्त्यावह इति स्वाभिप्रायद्योतनाय "कापी"त्युक्तम् । ८. तादृशं तपः । ९. यादृशेन तपसा ब्रह्मर्षित्वं प्राप्यते । १०. ब्रह्मादिभिरित्याकूतम् । ११.यत्र धारणया चित्तं कस्मिंश्चिल्लक्ष्ये स्थाप्यते, ध्यानेन तैलधारावदविच्छिन्नतया चित्तवृत्तिर्लक्ष्ये निषज्यते, तदनन्तरकर्मणा चित्तवृत्तिर्लक्ष्याकारेण परिणमते स समाधिरिति पतञ्जलिदर्शनप्रक्रिया, अत्र तु तपस इति यावत् । १२. इन्द्रादिभिः । १३. प्रेषितेति यावत् । १४. तन्नाम्नी अप्सरस्त्री । १५. प्रसिद्धा ताम् । १६. जलक्रीडावशात् । १७. विशेषेण लसन्तीम् । १८. सञ्जातानुरागात् । १९. मोहं प्रापितः देवादिभिः प्रभावेण न तु मेनकादर्शनमात्रेण । मुग्धोऽभूत्-सामान्यजनवदित्यभिप्रायः ।

देवैर्दिष्टान्[1] सोऽन्तरायान्[2] विदित्वा स्वीये चित्ते ज्ञातवान्[3] चंचलत्वम्[4] ।
चाञ्चल्याद्धा[5] कामबद्धा[6] भजन्ते[7] कार्ये हानिं[8] प्राणहानिं[9] प्रभूताम्[10]॥
तस्मादस्मात्तापसोऽयं महात्मा[11] क्षेत्राद्[12]गच्छन्नुत्तराशां[13] प्रपेदे ।
यत्र श्रेष्ठ[14]श्शैलराजो[15]ऽस्ति यस्माद्[16]गंगाद्या[17]स्ता निम्नगा[18] निम्नमार्गाः[19]॥

---

१. कल्पितान्-प्रापितानिति यावत्। २. विघ्नान्। ३. विदितवान्। ४. चंचलभावम्। स्वभावतो मम चित्ते बाह्यविषयापादितं चाञ्चल्यं नास्ति इन्द्रादिभिः परिकल्पितमेनकादर्शनादिपरिकर एव मच्चित्तचाञ्चल्यस्य कारणमिति ज्ञातवानिति तात्पर्यम्। ५, स्रक्चन्दनवनितादिविषयेषु कृतरागाद्यच्चित्तचांञ्चल्यं जायते तस्मादिति भावः। ६. विषयानुरागैराविष्टा जना इति शेषः। ७. प्राप्नुवन्ति। ८. कार्यनाशम्। ९. प्राणनाशमपि। १०. "अधिकाम्"- इदं पदं कार्ये हानिमिति पदस्य विशेषणम्। ११. ईदृशावस्थायां साधारणजनस्य कार्यहानिः प्राणहानिर्वा सिद्धा-अयं तु विश्वामित्रः असाधारणः पुरुषः अतः महात्मा महान्-आत्मा यस्य सः- जितमनस्क इत्यभिप्रायः। १२. पुष्करस्थानात्। १३. उत्तरां दिशम्। १४. दैर्घ्ये आयामे औन्नत्ये चासमान इति यावत। १५. हिमालयः। १६. अत्र यच्छब्दः हिमालयपदपरामर्शी-हिमालयादिति यावत्। १७. आदिशब्देन सिंधुशतद्रुयमुनाब्रह्मपुत्रादयो गृह्यंते। १८. नद्यः- इदं नदीनां रूढनाम। १९. समुद्राः निम्नदेशे वर्तन्ते खलु। अत्युन्नतप्रदेशात् हिमालयात्प्रसृतानां नदीनामत्यंतनिम्नप्रदेशस्थसमुद्रस्थलं प्रति निम्नमार्गप्रवहणं स्वाभाविकमेव।

ता[1]सु ख्यातो[2] श्रे[3]यसी कौशि[4]की सा तस्यास्तीरे पुण्यभूम्यां[5] स्थि[6]रं सः
निष्का[7]मोऽयं स्वस्थ[8]चित्तस्समाधौ चक्रे भू[9]यो दे[10]वंतापं तपो[11]ऽहो ॥
आ[12]विर्भूय ब्रह्मदेवस्स[13]सदेवो विश्वामित्रं ह्यऽब्रवीत्त्वं म[14]हर्षिः ।
जातो गच्छ श्रेष्ठसि[15]ध्या वह त्वं ध[16]र्म्यं क्षा[17]त्रं राज्यभारं क्ष्[18]मायाम् ॥
किंचि[19]त्तोषः किंचिदेवास्य दुः[20]खं तद्ब्रह्मोक्त्या[21] तृप्ति[22]रस्मिन्न जाता ।

---

१. नदीषु । २. प्रसिद्धा । ३. श्रेयस्करेति अस्य भाविसिद्धिरपि सूच्यते । ४. कौशिकीति गङ्गासङ्गवाहिनी काचिदुपनदी सा कुशिकस्य पुत्रीति पौराणिकी गाथा । ५. पवित्रस्थले । ६. निश्चलं यथा तथेति क्रियाविशेषणं चक्रे इति क्रियापदे अन्वेति अथवा तप इत्यस्य विशेषणं भवेत् । ७. यस्माद्विश्वामित्रात् निर्गतः कामः तादृश इति यावत् । ८. अत एव स्थिरमनस्कः । ९. पुनः । १०. देवानां संतापकरं संतापरूपं वा । ११. अहो इत्याश्चर्यं तपोमहात्म्यानुचिंतनजनितम् । १२. पुरः स्थित्वेति यावत् । १३. इन्द्रादिदेवैस्सहितः। १४. त्वं महर्षिरसि इति। १५. स्वोद्देशः फलित इति विज्ञाय । १६. स्वधर्मभूतम् । १७. क्षत्रजाति-योग्यम् । १८. धरण्यां स्वदेशे इति यावत्। १९. सन्तोषोऽपि न समग्रः । २०. दुःखमपि न पूर्णम्। २१. अतः ब्रह्मणः वचनेन "त्वं महर्षिर्जात" इति वाक्येनेति यावत् । २२. समाधानम् ।

शोकार्तानां[1] सान्त्वनार्थं[2] प्रवृत्तं[3] वाक्यं[4] तेषां न व्यथायै[5] न तुष्ट्यै[6]॥
शुद्धात्मानं[7] वाक्यतो[8] ब्रह्मणस्स्वं मेने यो[9] यत्तं[10] महर्षित्वमाप्तम् ।
आह ब्रह्मा त्वं न शुद्धस्समग्रं[11] तत्त्वं सिद्ध्यै[12] चित्तशुद्ध्या[13] यतस्व ॥
विश्वामित्रस्तेन भूत्वा विषण्णः[14] प्रारेभेऽसौ तमुमुग्रं[15] तपोऽत्र ।
इन्द्रो भूयो विघ्नमापादयद्धा[16] स्वत्राणाय[17] स्वीकृतः[18] कोऽप्युपायः॥
लावण्याढ्यामप्सरस्त्रीं[19] स रंभामाह स्वार्थादन्तरायं[20] महर्षेः[21]।

---

१. विविधदुःखैः पीडितानाम् । २, समाधानार्थम् । ३, विहितम् । ४, सान्त्ववचनम् । ५. व्यसनाय वा । ६. तोषाय वा - नालम् । सान्त्वोक्तिभिः व्यसनं किंचित्परिहीयते तोषश्च किंचित्प्राप्यते परन्तु न पूर्णव्यसनोच्छेदः नाऽपि पूर्णतोषाविर्भाव इत्यत्रार्थान्तरन्यासालङ्कारतात्पर्यम् । ७. यद्ब्रह्मणो वाक्यात् महर्षित्वमाप्तं स्वं शुद्धात्मानं यो मेने तत् तं ब्रह्माऽहेत्यन्वयः । शुद्धः-आत्मा यस्य तम् - विशुद्धमनस्कमिति यावत् । ८. त्वं महर्षिर्जात इति वचनात् । ९. विश्वामित्रः। १०. यस्मात कारणात् । ११. संपूर्णम् । १२. तपःसिद्ध्यै । १३. चित्तं-मनः तस्य शुद्धिः कामक्रोधादित्यागेन नैर्मल्यं-तया चित्त शुद्धिं सम्पादयेत्यभिप्रायः । १४. त्वं समग्रं न शुद्ध इति ब्रह्मणो वाक्याद् दुःखितस्सन् । १५. तपः कर्तुम् । १६. हेति विषादः-देवैर्भूयो विश्वामित्रस्य तपसो विघ्नाः आपादिता इति परिभावनया जनितः। १७. संरक्षणाय । १८. कल्पित "इति यावत् । १९. मुक्ताफलेषु या छाया तरलत्वमिवान्तरा, प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ।" इत्यादि लक्षणोपेतलावण्येन-सौन्दर्येण, आढ्यां-युक्ताम् । २०. स्वप्रयोजनोद्देशेनेति यावत् । २१. महर्षिपदभूषितस्य विश्वामित्रस्य।

लीलां[1]जालैस्संतनु[2]ष्वेति देवो[3] देवस्या[4]पि स्वार्थता[5] तत्र लभ्या[6]॥१४॥
सेयं[7] रम्भा बाढमित्या[8]दरेण प्रेष्टं[10] प्राप्ता तं मुनिं तापसेष्टम्[11]।
सैषो[12]द्युक्ता[13]ऽऽक्रष्टुमेनं विलासैस्तेन ज्ञातं देवै[14]तंत्रं विचित्रम्[15]॥१५॥
चुक्रोधा[16]ऽसौ वीक्ष्य तामाशु तन्वीं[17] शैलीभूया[18] इत्ययं तां शशाप।
दीना रंभा शाप[19]मुक्तिं ययाचे तामाहा[20]ऽसौ ब्राह्मणा[21]त्सा भवेत्ते॥

---

१. हावभावैरिति यावत्। २. कुरु। ३. इन्द्रः। ४. द्योतनशीलानां अमराणामपीति जात्यैकवचनम्। ५. स्वप्रयोजनभावः-स्वस्य प्रयोजनसंपादनमिति यावत्। ६. कुत्सितजनानामिव कपटोपायेन भवितव्येति स्तुतिनिन्दाद्योतिका विषादोक्तिः। ७. इन्द्रेण विश्वामित्रस्य तपोविघ्नार्थं या प्रेषिता सेयमिति व्यक्तिनिर्धारणार्थं तच्छब्दप्रयोगः। ८. यथोक्तं करोमि। ९. कार्यासक्तिदर्शकभावेन। १०. मत्कार्यं सिध्यति यदि ममायं प्रकर्षेण इष्टो भवतीति बुध्यारोपितप्रियम्। ११. ऋषीणां प्रियम्। १२. प्रारेभे। १३. तपस्सकाशाद् अमुं च्यावयितुम्। १४. देवैः कृतं कैतवम्। १५. विश्वामित्रकृततपोज्वालाभिरभितप्ताः देवाः एकदा तं विनयोक्तिभिराश्वासयंति तदनुपदमेव तस्य तपसोऽन्तरायान् कल्पयंतीति तेषां तंत्रे वैचित्र्यं प्रकटितम् अथवा स्वयं समर्था अपि देवाः स्त्रीमुखेनैव विघ्नानाचरन्तीति आश्चर्यभूतम्। १६. क्रुधधातोर्लिटि रूपम्। १७. अबलामिति यावत्। १८. अत्र त्वं शिला भवेति शापस्याकारः। "शैली" त्यस्य शिलासम्बन्धिनी-शिलारूपिणीति भावः। १९. शापमोचनोपायम्। २०. विश्वामित्रः। २१. कस्यचिद्ब्राह्मणस्यानुग्रहात्।

इन्द्राद्यास्ते संभ्रमा[1]त्संदधावु[2]र्विश्वामित्रस्त्वस्य कार्यं[3] च जज्ञे ।
त्यक्तः[4] कामो मेनकासङ्ग[5]बोधात्क्रोध[6]स्त्वस्यां[7] दर्शित[8]स्त[9]न्न युक्तम्॥
क्रोधस्त्याज्यः[10] कामव[11]च्छुद्धि[12]माप्तुं मच्चित्तेऽस्मिन्कल्मषं स्यान्न[13] किञ्चित् ।
शापो वक्त्रा[14]त्प्रेर्यते[15] तत्प्रयत्ना[16]न्मौनं[17] नित्यं संभजे[18] चित्तशुद्ध्यै[19] ॥
इत्यालोच्य प्रस्थितो विघ्नदेशात् पूर्वां क्षिप्रं प्राविशत्सोऽपि काष्ठाम्[20]।
चक्रे योगा[21]द्दुष्करं तत्तपोऽयं प्रत्याहृत्य[22] प्राणवृत्तीः[23] पवित्रम्[24] ॥
एवं तस्थौ दीर्घकालं समाधौ शक्ता विघ्नास्तापसं[25] न प्रवेष्टुम् ।

---

१. सभयत्वरया । २. द्रुतमधावन्नित्यर्थः । ३. मया किमिदानीं कृतमिति । ४. नाशितः-इन्द्रियजयेनेति भावः। ५. मेनकासहवासेन योऽनर्थस्तद्विज्ञानात् । ६. अमर्षस्तु । ७. अस्यां रंभायाम् । ८. शापप्रदानरूपेण प्रदर्शितः। ९. एवं क्रोधप्रदर्शनम् । १०. नाशयितव्यः । ११. यथा कामः प्रबोधेन नाशितः तथैवेति यावत् । १२. मनोनैर्मल्यम् । १३. किंञ्चिदपि किल्बिषं मच्चित्ते माऽभूदित्याशयः । १४. आस्यात् । १५. उच्चार्यते । १६. सम्यगिन्द्रियजयेन। १७. तूष्णींभावम्।१८. सम्यगाश्रये ।१९. चित्तशुद्धिसंपादनार्थम् । २०. दिशं । २१. "योगश्चित्तवृत्तिनिरोधः" इति पतञ्जलिमहर्षिदर्शितप्रकारेण अन्तःकरणवृत्तिनिरोधात । २२. विजित्येति संग्रहार्थः-इन्द्रियजयस्तु तत्तद्विषयेभ्यो मनसो निवर्तनद्वारैव । २३. प्राणानां जीवितस्य वृत्तीः-व्यापारान्-अथवा चेतनाधिष्ठितान्तः-करणव्यापारान्। २४. श्रेष्ठं तप इत्यस्य विशेषणम्।२५. तपोनिष्ठं विश्वामित्रम् ।

स्वाराजे[१]ऽन्नं[२] याचमानाय मौनाद्[३]त्वाऽ भुक्त्वा[४] सुस्थितो[५]ऽयं समाधौ[६]॥
ज्वालामाला[७]विस्फुलिंगास्तपोऽग्ने[८]श्शीर्षं[९] भित्वा[१०] जज्वलु[११]स्तन्महर्षेः।
लोकान्दग्धुं संप्रवृत्ता[१२] नितांतं देवास्सर्वे भीत[१३]भीता बभूवुः॥२१॥
क्षिप्रं गत्वा विश्वकर्तार[१४]मीड्यं देवास्ते तं प्रार्थयन्त[१५] प्रभो[१६] त्वम्।
दत्वा प्रार्थ्यं[१७] केनचिद्[१८]वर्त्मना तं कार्याद[१९]स्मात्कारय[२०] त्वं निवृत्तम्[२१]॥

---

१. इन्द्रः कदाचित् बहिर्मुखं स्थितं विश्वामित्रं प्रत्यागत्य तन्मौनभङ्गाय तेन स्वशरीरयात्रायै संपादितमन्नं ययाच इति श्रौती गाथा। स्वाराजे स्वः-स्वर्गस्य राट्-राजः-स्वाराट् तस्मै इन्द्रायेत्यर्थः। २. स्वशरीरपोषणाय विश्वामित्रेण संपादितं भोजनपदार्थम्। ३. तूष्णींभावेनैव। ४. भोजनं परिहृत्य। ५. विश्वामित्रः। ६. प्रकृते परिगृहीततपसि। ७. ज्वालामालाकारभूताश्च ते विस्फुलिंगा-श्चेत्यत्र समासः-विस्फुलिंगा अग्निकणाः। ८ तपसा जातः अग्निः तस्य। ९. शिरः-ब्रह्मरन्ध्रमिति यावत्। १०. ब्रह्मरन्ध्रप्रदेशादुद्भूयेति तात्पर्यम्। ११. ज्वलधातोः लिटि बहुवचनरूपम्। १२. प्रारब्धाः। १३. अत्यन्तभयग्रस्ता इति यावत्। १४. ब्रह्माणम्। १५. प्रपूर्वका-दर्थधातोः लङि बहुवचनम्। १६. प्रभो ब्रह्मन्निति संबोधनं तेषां संजातभीतिपरिहाराय प्रार्थनाद्योतकम्। १७. इष्टम्-विश्वामित्रः यद्य-द्वांछति तत्तत्सर्वं तस्मै दत्वाऽस्मान् त्रायस्वेत्याकूतम्। १८. केनापि मार्गेण। १९. उक्तात्तपोरूपकार्यात्। २०. कुरु इति प्रयोग एवालं तथापि कारयेति णिचि प्रयोगः तपोनिवृत्तिरूपं कार्यं ब्रह्मणापि साधयितुं न शक्यम्-तस्मै वरं दत्वा तेनैव तपोनिवृत्तिः कारयितव्येति तेषां देवानामभिसन्धिरिति द्योत्यते। २१. विमुखम्।

कामः क्रोधो लोभमोहौ च तस्मिन्नस्माभिस्ते प्रापिता[1] दोषशून्ये[2] ।
संतापं[3] नस्स्वापराधेन[4] जातं क्षन्त्वा[5] त्वं भोस्तापसं[6] सांत्वयस्व[7] ॥
श्रुत्वा ब्रह्मा काङ्क्षितं[8] निर्जराणामाविर्भूतस्[9] तापसाग्रे क्षणेन[10] ।
ब्रह्मर्षिस्त्वं[11] भासि[12] मेऽद्य प्रसादाद्[13] आरंभाद्धा[14]स्त्वं निवर्तस्व तुष्टः[15]॥
इत्यादिष्टं[16] ब्रह्मणा तेऽनु[17]मोद्य[18] ब्रह्मर्षिस्त्वं जात[19] एवेत्यवोचन् ।
लोके तावद्यद्वदेद्[20]वा बलिष्ठस्[21]तत्स्वीकार्यं[22] प्रायशोऽपीतरेषाम्[23]॥२५॥
विश्वामित्रो ब्रह्मणा सानुमोदं देवैश्चेत्थं तुष्टबुद्ध्योप[24]दिष्टम् ।
ब्रह्मर्षित्वं प्राप्य लोकेश[25]माह ब्रह्मर्षेर्मे भान्तु[26] वेदास्समग्राः॥२६॥

---

१. कारिता इति यावत् । २. वस्तुतो दोषरहितेऽस्मिन् । ३. विषादम् । ४. अस्मद्दोषेणेति यावत् । ५. क्षमस्वेत्यर्थे क्त्वान्तम् । ६. विश्वामित्रम् । ७. समाश्वासयेति तात्पर्यम् । ८. अपेक्षाम् । ९. सन्निहितः । १०. देवप्रार्थनानुपदमेव । ११. यदुद्दिश्य त्वयोग्रं तपः आचरितं तदेव ब्रह्मर्षिपदमित्यभिप्रायः । १२. ब्रह्मर्षिस्सन् ब्रह्मवर्चसेन भासि ब्रह्मर्षिरसीति तात्पर्यम् । १३. अनुग्रहात् । १४. तपोरूपकार्यात् । १५. स्वाभीप्सितकार्यसिद्ध्या संतृप्तस्सन् । १६. एवंरूपं ब्रह्मणो वचनम् । १७. देवा अपि । १८. अङ्गीकृत्य । १९. ब्रह्मणोऽनुग्रहेण त्वं ब्रह्मर्षिरसीत्यवदन् । २०. यद्वदति । २१. वाग्मी वा कार्यदक्षो वा शक्तो वा प्रबलो वा । २२. तदेवाङ्गीकार्यं भवति । २३. तदितरसदस्यानाम्, बलिष्ठेन यदंगीक्रीयते तदेवानुमोद्यते तत्सहचरैरिति तात्पर्यम् । २४. संतुष्टांतरंगैरिति यवत् । २५. ब्रह्माणम् । २६. प्रत्यक्षा भवंतु ।

ब्रह्मर्षिस्त्वं जात एवेति सोऽपि ब्रूयान्मां भोः श्रेष्ठभूतो वसिष्ठः ।
भूयात्तृप्तिस्तेन मे देवदेव प्रीतस्त्वं मे प्रार्थनां निर्वहस्व ॥२७॥
अस्त्वेवं भो द्राक्तमाह्वापयेऽहं वर्तस्व त्वं मित्रभावेन तेन ।
इत्याह्वाप्य प्रापितं सन्निधिं तं विश्वामित्रोऽभ्यर्चयत्प्रीतियुक्तः ॥

---

१. यस्य येन ब्रह्मतेजसा पराजितस्तन्नहं तदेव तपसा तव प्रसादेनाद्याप्नोमि स वसिष्ठ इति हृदयस्याभिप्रायः "स" इति सर्वनाम्ना निर्दिष्टः । २. श्रेष्ठ इति लोके प्रसिद्धः - मयाप्यनुभवेन विदित इत्यभिप्रायः । ३. आशंसायां आशीर्लिङि प्रयोगः । तव प्रसादेनैव भूयादिति प्रार्थनाद्योतकश्च । ४. मनस्समाधानमिति यावत् । ५. त्वं ब्रह्मर्षिरसीति वसिष्ठोक्त्यैव मे तृप्तिर्भवति नान्यथेत्याकूतम् । ६. देवानाम्-इन्द्रादीनां देवः ब्रह्मा आदिदेव इति यावत् अत एव "ब्रह्मात्मभूस्सुरज्येष्ठः" इत्यमरकारः तस्य संबोधनं । ७. प्रार्थनां सफलां कुर्वित्यभिप्रायः । ८. वसिष्ठम् । ९. ह्वेधातोः णिचि आत्मनेपदि उत्तमपुरुषैकवचनम्-शिष्यान् प्रेष्य तमिहानाययामीति तात्पर्यम् । १०. स्नेहभावेनेति यावत् । ११. आनाय्य । १२. समीपमागतम्-आह्वापनं प्रापणं च अन्यैः कारितत्वात उभयत्र णिचा प्रयोगो युक्तः । १३. अर्घ्यपाद्यादिभिः यथासम्प्रदायमतिथिसत्कारं चकारेत्यभिप्रायः । १४. प्रीत्या युक्तः-प्रीतिस्त्वत्र "अयं ब्रह्मर्षिरहं ब्रह्मर्षिः' मम ब्रह्मर्षित्वं सहजब्रह्मर्षिणाऽनेन सिद्धीक्रियत इति भावनया जातः स्नेहविशेष एव ।

ब्रह्मर्षि[1]स्त्वं जात[2] एवेति सिद्धं[3] ब्राह्मण्यं[4] तद् ब्रह्म[5]देवादवाप्तम्[6] ।
ब्राह्मं[7] तेज[8]स्स्थास्य[9]तीह[10] त्वयी[11]त्थं ब्रह्म[12]ज्ञाने तेऽनिशं[13] भासतां[14] धीः[15] ॥
वसिष्ठोक्तामेतां वा[16]चमेवं[17] विवेक्तुः[18]

---

१. अस्य पद्यस्य यावदर्थः- वसिष्ठोक्ताशीरूपः । ब्रह्मर्षिः- ब्रह्मविषयकतत्त्वदर्शी ऋषिप्रभेदेषु परमोत्कृष्टवर्गगः । २. असि- ब्रह्मवचनेनैव । ३. एतद् ब्रह्मवचनं सिद्धम्-सत्यमिति मया- ऽत्रोच्यते इति तात्पर्यम् । ४. ब्रह्मणे परमात्मने - वेदेभ्यो वा हितं ब्रह्मण्यम्, ब्रह्मण्यमेव ब्राह्मण्यम् । अथवा ब्रह्म - शुद्धं चैतन्यं वेदं वा, वेत्त्यधीते वा ब्राह्मणः, अण्प्रत्ययः- तस्य भावः ब्राह्म- ण्यम् । ५. ब्रह्मणः प्रसादात् । ६. प्राप्तम् अधिगतमिति यावत् । ७. ब्रह्मसम्बन्धि । ८. वर्चः । ९. इतः परं त्वयि सततं तिष्ठतीत्यर्थे लृट् । १०. अस्मिन् लोके । ११. अद्य यथा इतः परमपि एवमेवेति नैरन्तर्यस्थितिविमर्शः प्रस्तावितः । १२. ब्रह्मस्वरूपाऽवबोधनानुकूलव्यापारे, "अहं ब्रह्मास्मि" "सर्वं खल्विदं ब्रह्म" त्येवंजातीयज्ञाने । १३. निरन्तरम् - अनुस्यूतम् अविच्छिन्नमिति यावत् । १४. प्रसरतु - चित्स्वरूपत्वाद्ब्रह्मणः तत्साक्षात्कारमिच्छतां चित्तं समाधौ तन्मयं भूत्वा कोटिसूर्यवत्प्र- काशते इति योगविदामनुभवं योगविद्वसिष्ठः विश्वामित्रायाशीरु- क्त्योपदिशति । १५. हृदयंबुद्धिर्वा । १६. अशीरूपं पूर्वोक्तं वाक्यजातम् । १७. यथोक्तम् । १८. पर्यालोचयितुः ।

प्रतिष्ठा[१] जाताऽहो[२][३] सर्वतो[४] गाधिसूनोः[५] ।
प्रतुष्टा[६] ब्रह्माद्यास्स्वस्वलोकानगच्छन्
विशिष्टो[७] वेदेषु[८] प्रोच्यते[९] कौशिकोऽयम्[१०] ॥३०॥

इति श्रीवेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके विश्वामित्रचरितकाव्ये ब्राह्मण्यप्राप्तिर्नाम तृतीयस्सर्गः॥

---

१. प्राधान्यं यश इति यावत् । २. संजाता अभूदित्यर्थः । ३. तपःप्रभावेण अयं ब्रह्मणः-देवानाम् - स्वप्रतिपक्षभूतवसिष्ठमहर्षेश्च प्रीतिपात्रं भूत्वा ब्रह्मर्षित्वं साधयामासेति हर्षप्रकर्षद्योतकोऽयं निपातः । ४. सर्वत्र-लोकेषु । ५. विश्वामित्रस्य । ६. प्रकर्षेण तुष्टाः । ७. विशेषेण शिष्ट इति । ८. श्रुतिषु । ९. कथ्यते । १०. विश्वामित्रः ।

अस्मिन् सर्गे प्रतिबंधप्राप्तिः-तन्निवृत्युपायः-तपोमाहात्म्यम्, निरंतरप्रयत्नेनासाध्यसाधनम्-देवताप्रसादाधिगमप्रकारः- साधुजनसौहार्दम् इत्यादयः प्रतिपादिताः इति सुधियो विजानंति । अंतिमपद्यं चंचरीकावलीवृत्तनिबद्धम् । तल्लक्षणम् "यमौ रौ विख्यातौ चंचरीकावली गः" इति । इति श्रीवेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके विश्वामित्रचरितकाव्ये ब्राह्मण्यप्राप्तिनामकतृतीयसर्गस्य स्वेनैव रचिता गंभीरपदार्थबोधिन्याख्या व्याख्या समाप्ता ।

---

# अथ चतुर्थस्सर्गः

विश्वामित्रस्सुरमुनिविनुतो[1] योऽसृजत्स्वर्गमन्यं[2]
ब्रह्मर्षित्वं स्वकृतसुतपसा[3] साधितं येन यत्नैः[4] ।
सोऽयं वेदेष्वसकृदभिहितो[5] मंत्रदृश्वा[6] महात्मा[7]
विख्यातोऽभूत्परमसुहृद्यो[8] दीनकारुण्यपूर्णः[9] ॥१॥

अस्मिन् सर्गे अन्तिमपद्यं विना तदितरपद्यानि चित्रलेखा-वृत्तनिबद्धानि । तल्लक्षणम् "मन्दाक्रान्ता नलघुपरयुता कीर्तिता चित्रलेखा" इति । १. देवैः ऋषिभिश्च अभिनुतः । २. न केवलं अयमनेकान्यनितरसाध्यानि कार्याणि कृतवान् अपि तु त्रिशङ्कुकृते देवतारादियुतम् अन्यं स्वर्गमपि सृष्टवानित्यर्थः । ३. समीचीनेन तपसा-तपसस्समीचीनत्वं नाम-समीहितं यत् तस्य, मध्ये विघ्नपरम्परया प्रतिबन्धप्राप्त्यापि अन्ततः तीव्रतपोमहिम्ना साधकत्वम् । ४. मुहुर्मुहुरङ्गीकृतैः प्रयत्नविशेषैः—तानि च प्रयतनानि चतुर्दिक्षु स्वतपसा प्रदर्शितानीति तृतीयसर्गे सम्यग्विशदीकृतम् । ५. अनेकत्र वेदेषु प्रख्यातः- अथवा अनेकशः मन्त्रानयमपश्यदित्यर्थः । ६. स्वतस्सिद्धानां मंत्राणां दर्शनं शुद्धचित्ते देवप्रसादाद्भवतीति सम्प्रदायविदो वदन्ति । ७. महान् आत्मा (मनः बुद्धिः चेतनास्वरूपं वा)यस्य सः । ८. उदारचेताः । ९. दयालुः ।

गायत्र्यास्ते[1] बहुनुतमहिमा[2] याऽऽर्यमंत्रेषु[3] मुख्या
विश्वामित्रः प्रथम[4]ऋषिरभूत्सारवेत्ता[5] हि[6] तस्याः ।
तन्मन्त्राप्तश्रुतिविहितजपात्[7] क्षीयते पापजालं[8]
गाधेस्सूनोर्जगति[9] परयशो[10] गीयतेऽस्या ऋषित्वात्[11] ॥२॥

---

१. गायन्तं त्रायत इति गायत्री-मन्त्रविशेषः- स्वेष्टदेवता-महिमार्थबोधकः- परब्रह्मस्वरूपबोधको वा । २. अनेकैरनेकधाऽनेकत्र प्रशंसितप्रभावशालिनीति यावत् । ३. सनातनार्यैरनुष्ठीयमानेषु श्रौतस्मार्तकर्मोपयुक्तवेदमंत्रेषु । ४. प्रथमतः अयमेव गायत्रीद्रष्टा, यथा "गायत्र्याः गायत्रीछन्दो विश्वामित्र ऋषिः" इति नित्यकर्माङ्गभूतसंध्याकर्मणि विहितम् । ५. तत्वज्ञ इति यावत् । ६. हीति प्रसिद्धार्थको निपातः- सारवेत्तेति पदेन वा प्रथमऋषिरभूदिति वाक्येन वा अन्वेति । ७. गायत्रीमन्त्रमधिकृत्य वेदेषु "अहरहस्सन्ध्यामुपासीत" इति विधिः विहित इति तात्पर्यम् । तन्मंत्रस्य जपः एकाग्रमनसा पुनः पुनरभिवदनम् । ८. तस्मात्सर्वाणि पापानि नश्यंतीति सुप्रसिद्धम् । अत एवोक्तम् "न गायत्र्याः परो मन्त्रः" इति । ९. अयं गाधिः कुशिकस्य सुत इति श्रुतिषु विदितम् । "कुशनाभसुतस्त्वासीद्गाधिरित्येव विश्रुतः" इति रामायणे कौशाम्बीदेशाधिपस्य कुशनाभस्य पुत्र इति विदितः । तस्य गाधेः सूनुः- पुत्रः--विश्वामित्रः तस्य । १०. उत्कृष्टकीर्तिः । ११. तस्याः गायत्र्याः अयम् ऋषिः द्रष्टेति हेतोः ।

तन्नाम्नात्तो[1]द्विविधवि[2]षयगात्कल्प[3]नामप्रबंधात्
प्रायो गृह्यो[4]ः प्रतिदिन[5]पठिताः सर्वमंत्रा[6] विभांति ।
तंत्रो[7]ऽन्योऽस्ति स्तव[8] इति च परस्तत्त्वमन्य[9]ंच्च कल्पो[10]
गाय[11]त्रीति प्रथमपदयुता ग्रंथमुख्यास्तदीया[12]ः ॥३॥
अन्यो मंत्रो विलसति विमलश्शाप[13]मोक्षाभिधायी
मंत्राश्चान्ये परम[14]हिमयुता वेदभागेषु दीप्ता[15]ः ।
अध्यात्माख्ये मुनिवच[16]नकृते भान्ति राम[17]ायणेऽपि

---

१. तस्य विश्वामित्रस्य नाम्ना विदितात् । २. अनेकविषयगोचरात् । ३. "विश्वामित्रकल्प" इति ग्रंथात् । ४. गार्हस्थ्यकर्मयोग्याः । ५. वर्णाश्रमकर्मानुष्ठानपरा ये तैः प्रतिदिनं एते मंत्राः पठ्यंते इत्यभिप्रायः । ६. इदं पदं प्रायः इति पदेन समभिव्याहारात् अनेके मंत्राः इत्यर्थे गौणमर्यादया वेदितव्यम् । ७. गायत्रीतंत्रम् । ८. गायत्रीस्तवः । ९. गायत्रीतत्त्वम् । १०. चकारात् अपर इति सूच्यते स च गायात्रीकल्पः । ११. एतेषु सर्वेषु गायत्रीपदमनुवर्तते इति तात्पर्यम् । १२. विश्वामित्रप्रणीताः । १३. विश्वामित्रशापविमोचनमंत्र इति प्रसिद्धः । १४. विशेषप्रभावोपेताः सद्यःफलदाः । १५. प्रकाशिताः प्रतिष्ठिताः—प्रसिद्धा इति यावत् । १६. अध्यात्मरामायणमिति प्रसिद्धोऽयं ग्रन्थः- विश्वामित्रकृतः तस्मिन् । १७. श्रीरामचरितं निमित्तीकृत्य तत्वानां प्रतिपादितत्वात् तस्यापि रामायणमिति व्यवहारः ।

प्रख्यात[1]श्रीरघुपतिचरिताऽवाप्ततत्त्वार्थबोधाः ॥४॥
सृष्टे[2]रादौ स ऋषि[3]र्विदि[4]तानत्र संपात[5]नाम्ना
ख्याता[6]न्मंत्रान् स्वम[7]नसि सुदृ[8]शाऽपश्य[9]दीशप्रसा[10]दात् ।
तेषां यागेष्वसकृ[11]दुपकृ[12]तिश्शास्त्रबद्धा[13] प्रसि[14]द्धा
चित्ते शुद्धे विलसति बहुधा दि[15]व्यतेजःप्रकाशः ॥५॥

---

१. सर्वतः प्रसिद्धानां सर्वसंपत्समृद्धानां रघूणां श्रेष्ठ इति यावत् । श्रीराम इति तात्पर्यम् । तस्य चरितानि वृत्तानि (ऋषि-जनावन-राक्षसहननादिरूपकार्याणि) तैरवगतानां तत्वानाम् अर्थाः तेषां संबंधिनः तेभ्यो जाता वा बोधाः—उपलब्धयः । २. सृष्ट्यारम्भे । ३. विश्वामित्रः । ४. न केनापि दृष्टान् । ५. संपातनाम्ना सम्पात-संज्ञायाः कारणमुत्तरत्र प्रतिपाद्यते । ६. विदितान् ७. स्वात्मनि । ८. सूक्ष्मदृशा आध्यात्मिकज्ञानेनेति यावत् । ९. ददर्श । १०. तद्दर्शनम् - ईश्वरानुग्रहेणैव - न तु स्वप्रतिभाबलेनेत्युक्तत्वात् न वेदानाम् अपौरुषेयत्वहानिशङ्का। ११. अनेकशः। १२. उपकारः-प्रयोगमुखादित्यर्थः । १३. शास्त्रेषु - वेदेषु विहिता इदं कुरु अदः मा कुरु इति यत् शास्ति तत् शास्त्रम्, तच्च वेदरूपमेव, तस्यैव, सर्वप्रामाण्यम् अनादित्वादपौरुषेयत्वात् स्वतस्सिद्धप्रमाणत्वाच्च । १४. अतः सर्वत्र विदिता । १५. दिवि भवं दिव्यम्, निर्मलमिति यावत् तेजः-ज्ञानदीपः तस्य प्रकाशः- दीप्तिः- निर्मलचित्ते जितेन्द्रियाणाम् ऋष्यादीनां ज्योतिष्मती संयमसिद्धानां वा लोकानुग्रहार्थं तत्तत्कालोचिताऽशेषविषयकज्ञानः ईश्वरानुग्रहेण प्रस्फुरति - तदनुबद्धाः वचःप्रकाराः मंत्रा इत्युच्यंते ।

तानि[1] त्रीणि प्रकृति[2]सुमधुराण्यादरा[3]द्वाम[4]देवः
सूक्तान्यार्यस्स्वमहिमबलतो[5]ऽधीत्य[6] बुध्वा तदर्थान्[7] ।
मद्दृष्टानि[8] स्तुत[9]सुखफलदानीत्यकार्षी[10]त्प्रसिद्धिं
श्रेष्ठे वस्तु[11]न्यपहरण[12]मतिश्शास्त्र[13]वित्सम्मता किम् ॥६॥
शास्त्रं[14] बोधं[15] सुहृदि निज[16]दयां गौरवं[17] चात्म[18]शुद्धिं
त्यक्त्वा लोके परधनहरणे लाघव[19]वादी[20]दृशीच्छा ।
जायेता[21]ऽलं कु[22]मतिनरि पर[23]ं जायते न प्रबुद्धे[24]

---

१. संपातसूक्तानि । २. प्रकृत्या मनोहराणि संस्तुतार्थप्रतिपादकानि । ३. परमप्रीत्या । ४. वामदेवाख्यो वेदवेदान्तप्रसिद्धो महर्षि । ५. स्वबुद्धिशक्त्या । ६. स्वयमभ्यस्य । ७. तन्मन्त्रार्थान् सम्यग्विदित्वा ८. एतानि सूक्तानि मया दृष्टानि । ९. प्रशस्तसुखफलदानीति । १०. प्रसिद्धं चकार । ११. प्रशस्तेऽपि परकीयवस्तुनि । १२. तदपहर्तुं व्यवसिता मतिः । १३. शास्त्रविदां संमता वा-न कदापि संमतेत्यभिप्रायः । १४. श्रुतिस्मृतिपुराणादिविहितधर्मान् । १५. गुरुपितृमित्रादिभिरुपदिष्टधर्मान् । १६. स्वमित्रे स्वस्य प्रीतिं अनुकंपां वा । १७. स्वस्य योग्यतास्थितिम् । १८. आत्मसाक्षिप्रबोधम् । १९. नीचत्वापादकप्रवृत्या । २०. परहरणरूपा । २१. जायतां नाम । कुत्र ? । २२. कुत्सिता निंद्यामतिः-बुद्धिर्यस्य सः तादृशे नरि नरे मनुष्ये-नृशब्दस्य सप्तम्येकवचनरूपम् । अत्र नृशब्दप्रयोगः नीचत्वद्योतकः। २३. परन्तु इदमव्यय पदं पूर्वापरपदार्थयोर्वाक्यार्थयोर्वा विरोधसंबन्धद्योतकम् । २४. न तु विदुषि ।

किं वा[1]ऽकार्यं कुटिल[2]पथजुषां स्व[3]प्रतिष्ठापराणाम् ॥७॥
क्षिप्रं[5] शिष्यानथ स कतिपयानाजुहाव प्रमोदा[4]-
त्तानध्याप्य स्वयमति[5]रभसात्तानि सूक्तान्यजैषीत्[6] ।
कीर्तिस्तस्य प्रचुरसुँखकरा[7] मन्त्र[8]दर्शीति दृष्टा
शिष्यान् सम्यक् द्रुतम[9]यमपतच्चेति संपात[10]संज्ञा ॥८॥
विश्वामित्रस्सुविदितविषयो[11]ऽप्यत्र[12] मौनं प्रपेदे[13]
तस्य स्वान्तं[14] न विकृत[15]मभवद्वामदेवस्य कृत्या[16] ।

---

१. निषिद्धम्-प्रतिषिद्धम्, सर्वं कार्यमेव । केषाम् । २. कुत्सितमार्गप्रवृत्तानाम् । ३. "येन केन प्रकारेण प्रसिद्धः पुरुषो भवे"दिति निंदास्तुतिमनुसंधाय, स्वपुरस्कारसंपादनेच्छूनाम् । ४. संतोषेण । ५. अतिशीघ्रम्-विश्वामित्रः आगत्य स्वकृत्यं जानीयाच्चेत्तदा स्वस्य प्रतिष्ठा न भवेत् तस्मादतिशीघ्रं शिष्यानध्याप्य संपातमंत्रद्रष्टायमिति गौरवं सम्पादनीयमिति कार्ये सत्वरप्रवृत्तिः । ६ एवं कुटिलगत्या स्वकार्यं साधितवानित्यर्थः । ७. अतिसुलभा । ८. वामदेवऋषिः संपातमंत्रद्रष्टेति । ९. अतिशीघ्रं प्रापत् - तद्दृष्टमंत्राध्यापनाय सर्वनशिष्यानयमपतत् प्राप्तवान्-सहसा-अध्यापयामासेति तात्पर्यम् । १०. एतेषां मन्त्राणां संपातसंज्ञातु सम्यक्प्रकटीकरणात् । ११. सम्यग्विदितः-ज्ञातः-विषयः- स्वदृष्टसूक्तानि वामदेवेनापहृतानीत्यादिवृत्तांतः, येन सः । १२. अस्मिन् संदर्भे । १३. कोपोदयस्य सुलभे अवकाशे सत्यपि मौनमेव भेजे तूष्णींभावेन स्थित इति यावत् । १४. अंतःकरणम् । १५. विकारं न प्रापत् । १६. वामदेवस्य निंदिताचरणेन ।

पूर्वं तावत्सुसुलभरुडयं[1] नाद्य तस्मै[2] चुकोप
ज्ञाते तत्वे षडारिपरिभवो[3] जायते ह्यप्रयत्नात्[4] ॥९॥
मत्सूक्तानि[5] प्रकटयति गुरुद्रोह्ययं[6] वामदेव-
स्तद्दृष्टानी[7]त्यतिसुलभतया[8]ऽध्यापयच्छिष्यवृन्दम् ।
सूक्तान्यन्यान्यहमपि[9] षडिह[10] प्रेरणाद्देवतानां[11]
सम्पातानि[12] स्तुतसम[13]विभवान्यद्य कर्तुं विजाने[14] ॥१०॥
इत्यालोच्य स्वयमतिनियमा[15]त्सूक्तषट्कं स दृष्ट्वा[16]

---

१. सुसुलभा-रुट् - क्रोधः यस्य सः अत्यन्तसुलभक्रोध इति यावत् । २. अद्य तु तस्मै वामदेवाय । ३. कामक्रोधलोभमोहमदमात्सर्याख्यानां षड्रिपूणां पराजयः। ४. प्रयत्नं विना संभवतीत्यर्थः- तत्वज्ञानिनां कामक्रोधादिवासनापि न स्मृतिपथमारोहतीति भावार्थः । ५. मया दृष्टानि सूक्तानि । ६. तानि सूक्तानि प्रथमतः विश्वामित्रेण दृष्टानि, अतः अयं गुरुस्थानीयः, वामदेवऋषिः तानि शिष्यवदत्यादरेणाऽधीत्य तदर्थान् विज्ञातवान् - एतत्कारणादपि तस्य विश्वामित्रो गुरुर्भवितुमर्हति । तत्सूक्तापहरणेन वामदेवः गुरुद्रोही बभूव किल । ७. तेन वामदेवेन दृष्टानीति । ८. स्वप्रयत्नं विना । ९. अपिशब्दः अन्यानीत्यत्र योज्यः- अन्यान्यपि सूक्तानि द्रष्टुमहं शक्त इति भावः। १०. षट्संख्याकानि-पूर्वं त्रीण्येव सूक्तानि दृष्टानि । ११. देवतानां प्रेरणादित्यनेन एतेषां सूक्तानां पौरुषेयत्वदोषो निवार्यते । १२. सम्पातनामकानि । १३. एतेषु सूक्तेषु विभवाः प्रभावाः स्तुताः (पूर्वसूक्तैः) समाः भवंतीति तात्पर्यम् । १४. वेद्मि । १५. अत्यन्तनियमैर्युक्तः । १६. ददर्शेत्यर्थः ।

शिष्यानध्यापयदतिसुमतिर्[1]यागयोग्यं[2] विशेषात्[3] ।
एवं[4] दृष्टं विधिषु[5] बहुतरं[6] भाव्यते[7]ऽहो[8] पवित्रं[9]
लब्धे[10] नष्टे[11] सहजमति[12]बलादर्ज्यते[13] तद्विगुण्यम्[14] ॥११॥

विश्वामित्रस्स्वयमभयमदाद्यच्छुनश्शेपनाम्ने
तद्वृत्तान्तश्श्रुतिकथितकथालक्ष्यतः[15] प्रोच्यतेऽद्य[16] ।
यज्ञान्ते तद्र[17]विकुलनृपतेश्श्रीहरिश्चन्द्रनाम्नो[18]

---

१. अत्यन्तप्राज्ञः । २. यज्ञोपयोगार्हम् । ३. विशेषतः तेषां सूक्तानां यागेषु विनियोगः विहित इति तात्पर्यम् । ४. एवं रीत्या विश्वामित्रेण दृष्टं सूक्तषट्कम् । ५. यज्ञकर्मसु । ६. अतिशयेन । ७. अङ्गीक्रियते । ८. आश्चर्यार्थद्योतकः । ९. परिशुद्धम्। एतैर्मन्त्रैर्विना कर्माणि पूतानि न भवंतीत्याकूतम्। १०. लब्धे महता यत्नेन समधिगतवस्तुनि । ११. नाशं गते सति । १२. धीमता स्वबुद्धिशक्त्या । १३. संपाद्यते । १४. तस्य नष्टस्य वस्तुनः द्विगुण्यम्-द्विगुणपरिमितम्-गुणयितुं योग्यं-गुण्यम् ; द्वाभ्यां गुण्यम्-द्विगुण्यम् ; तस्मादपि द्विगुण्यम् - तद्विगुण्यमित्यत्र विग्रहः । १५. दृष्टान्तरूपेण । १६ प्रकर्षेण कथ्यते - विस्तरेणाविष्क्रियते इत्यभिप्रायः । १७. रवेः कुलं तस्मिन् जातः- सूर्यवंशप्रभव इति यावत्, नृपतिः- हरिश्चन्द्रः, स चासौ रविकुलनृपतिश्च तस्य । अत्र तच्छब्दः प्रसिद्धार्थकः- सुप्रसिद्धः खलु हरिश्चन्द्रः नृपतिः । १८. अत्र श्रीशब्दः मङ्गलार्थको गौरवार्थकस्संपत्समृद्धिसूचको वा भवति ।

मीमांसा[१]ऽभूदृषिगणसदसि[२] स्वेष्टवार्ताविशेषे[३] ॥१२॥
ऋत्विग्वृन्दे[४] नृपवरसहिते[५] विस्मिते[६] तत्सभायां
तत्कालोर्ध्वं[७] ननु[८] भवति शुनश्शेप एष स्तुतात्मा[९] ।
पुत्रः कस्य श्रितवरकुलगस्स्यादिति[१०] पृच्छयात्तान्[११]
ब्रूयात्सोऽयं[१२] स्वबहुहितधिया[१३] स्वेष्टमित्याहुरन्ये[१४][१५] ॥१३॥
तच्छ्रुत्वाऽयं समुदितरभसात्[१६][१७] कौशिकस्याङ्कमाप्त्वा[१८]

---

१. विचारः । २. ऋषिजनप्रचुरसभायाम् । ३. स्वेषाम्-तत्रस्थसभ्यानाम्, इष्टा या वार्ता तस्या विशेषे-हृदि अत्यन्तसन्निहित-विषयविमर्शे । ४. ऋत्विजां समूहे । ५. हरिश्चन्द्रेणसाकम्, युक्ते । ६. विस्मयाक्रांते सति - विस्मयस्तु हरिश्चन्द्रकृतयागे, पशुत्वेन यूपे बद्धस्य शुनश्शेपस्य देवताप्रभावेण बन्धविमोचनात् जातः, अञ्जस्सवादिकर्मणा शुनश्शेपमहर्षेर्यज्ञनिर्वाहकसामर्थ्यावेक्षणेन प्रादुर्भूतश्च । ७. तदारभ्य । ८. ननु इति प्रश्नसंभावना । ९. स्तुतः- प्रशस्तः आत्मा यस्य सः महात्मेति यावत् । १०. श्रितं च वरं च कुलं तद्गच्छतीति श्रितवरकुलगः । कस्य श्रेष्ठे वंशे प्रविष्टो भवतीति प्रश्नस्याभिप्रायः । ११. प्रश्नेनोप-हितान् - इत्येवं यैः प्रश्नः कृतः तान्प्रतीत्यर्थः । १२. स एव शुनश्शेपः १३. स्वस्याभिमतहितं कस्मिन् वंशे भवेदिति स्वधिया निश्चित्य ब्रूयात् उत्तरं वदेदिति । १४. स्वमतम् । १५. इतरे ऋषयः । १६. सप्रमोदः। १७. सत्वरम् । १८. विश्वामित्रस्याङ्के उपविश्य ।

तस्थौ[1] यद्वत्सुते[2] इह पितुरप्यङ्कमारुह्य[3] तिष्ठेत्[4] ।
सर्वोत्कृष्टं[5] वसनमपि[6] फलं[7] ह्यापणे वस्तुपूर्णे[8]
दृष्टं सत्तत्कुशलहितधिये[9] रोचते तीव्ररागात्[10] ॥१४॥
प्रीत्या[11] स्वामिन् मम तनयमिमं देहि मह्यं मुने त्वं
यस्मिन् स्नेहोऽस्ति मम तु सहजो[12] मातुरप्यस्य तद्वत् ।
सोऽजीगर्तो विनयवचनतो[13]ऽहो[14] तमार्तो[15] ययाचे[16]

---

१. तत्रैवाऽतिष्ठत् । कथम् । २. यद्वदिह स्वपितुरङ्के सुतोऽधितिष्ठति तद्वदिति । शुनश्शेपेन विश्वामित्रः स्वपितृवद्भावितः इत्याकूतम् । यथा । ३. पुत्रस्य मातुरङ्के स्थितिः सर्वत्र रूढा । पितुरङ्के स्थितिरपि कदाचिद्भवतीत्यपिशब्देन बोध्यते । ४. लडर्थे लिङि प्रयोगः । ५. अत्युत्तमत्वेन भावितम् । ६. परिधानादि-योग्यं वस्त्रम् । ७. सुरुचिकरमाम्रादिफलम् । उभयत्र जात्यैक-वचनम् - अन्येषामीदृशवस्तूनामेते उपलक्षणे भवतः । ८. वस्तुभिः पदार्थैः पूर्णे निबिडे । ९. कुशला समर्था हिता इष्टा धीः-बुद्धिः यस्य तस्मै पदार्थयोग्यतापरीक्षाधुरीणायेति भावः। १०. परमासक्तिवशात् । ११. मयि करुणयेति प्रकरणोचितार्थः । १२. अकृत्रिम इति यावत् । १३. विनयेन युतं वचनमिति मध्यमपदलोपी समासः नम्रवाक्यैरिति यावत् । १४. अहो इत्याश्चर्यं स्वपुत्रहननोद्युक्तस्या-प्यद्य पुत्रवात्सल्यम् अभूदित्यर्थद्योतकम् । १५. दीनो भूत्वा-पुत्रविर हेणाऽर्दित इति यावत् । १६. प्रार्थयतेत्यर्थः- अजीगर्तः स्वतनयं याचितवानिति फलितार्थः ।

जाते[1] प्रीतिः[2] प्रकृति[3]बलवशाद्दुष्ट[4]बुद्ध्योश्च पित्रोः[5] ॥१५॥
विश्वामित्रस्तदनु[6] त[7]मवदन्नाहमेतं ददे ते
देवा[8]स्त्वं मे निरवधि[9]कृपया प्राददुश्श्रेष्ठपुत्रम्[10] ।
देवैर्दत्तो[11]ऽयमिति सुविदितो[12] देवरातेति नाम्ना
को वा लोके त्यजति वरम[13]णिं याच्ञया[14] दैवदत्तम्[15] ॥१६॥
सोऽजीगर्तस्स्वतनयमवदद्देहमायाहि सूनो
माताऽहं त्वां सदय[16]मविरतं[17] स्नेहभा[18]वेन पूर्णौ ।

---

१. स्वतनये । २. वात्सल्यम् । ३. प्रकृतेः स्वभावस्य बलवशात्-बलादिति यावत् । ४. दुष्टा बुद्धिर्ययोस्तयोः कथंचित्पुत्र-विषये व्यतिक्रमाचारवतोरपि । ५. मातापित्रोः माता च पिता च तयोरित्येकशेषः- दुरात्मनोरपि मातापित्रोः स्वपुत्रे वात्सल्यं प्रकृत्या निगूढं भूत्वा काले उद्बुध्यते इति तात्पर्यम् । ६. अनन्तरम् । ७. अजीगर्तम् । ८. प्रजापत्यादयः । ९. अत्यन्तकारुण्यभावेन । १०. श्रेष्ठश्चासौ पुत्रश्च तम्, पुत्रेषु श्रेष्ठमित्यर्थः । ममेदानीमेकोत्तर-शतसंख्याकपुत्रास्सन्ति । अयं त्वन्यः तेषु श्रेष्ठपुत्रत्वेन स्वीकर्तुं देवतानुग्रहो मयि प्रदर्शितः, तस्मान्नाहमिमं ते ददामि इति विश्वामित्र-स्याभिसंधिः । ११. अयं शुनश्शेपः मे देवैरनुगृहीतः । १२. सुप्र-सिद्धः । १३. रत्नराजं । १४. मह्यमिदं देहि इत्यभ्यर्थनया केवलं । १५. दैवात्संप्राप्तम् अथवा देवैरनुग्रहपूर्वकं दत्तम् । सूर्यानुग्रहेण लब्धस्स्यमन्तकमणिः श्रीकृष्णेन याचितोऽपि सत्राजिता न दत्त इत्यै-तिह्यमप्यत्रानुसंधेयम् । १६. सविश्वासम्-सगौरवं च । १७. सर्वदा । १८. प्रीतिभावेन ।

त्वय्यायत्तं[1] सकलमपि धनं जात कृत्वा सहर्षं[2]
[3]श्रेष्ठं प्रेष्ठं[4] कलितऋषिपदं[5] तोषयावोऽत्र[6] मोदात्[7] ॥१७॥

जानीहि त्वं भवसि कमलजाद्[8]अङ्गिरोवंशजन्मा[9]
सत्संतानो[10] विफल[11] इति जनो मा वदत्वत्र कोऽपि ।

आगच्छ त्वं मम गृहमभयं[12] दीयते गोधनं[13] ते
प्रत्याजाने[14] त्वदितरसुतयो[15]स्तन्न भाज्यं[16] कथंचित्[17] ॥१८॥

इत्यादिष्टः[18] पितुरथ तनयः प्रार्थनां नानुमेने[19]

---

१. तवाधीनं कृत्वा । २. सोत्साहम् । ३. पुत्रेषु श्रेष्ठम् । ४. मातापित्रोः प्रेष्ठम् - अत्यन्तप्रीतिपात्रमिति यवत् । ५. ऋषिपदेन युतं त्वाम्-ऋषिनाम्ना सर्वदा व्यवहृत्य ( आवां पितरौ । ) ६. सर्वैः प्रयत्नैस्त्वां तोषयावः- तव संतोषं करवावहै इत्यभिप्रायः । तोषयाव इति तुषधातोः णिचि लट्युत्तमपुरुषद्विवचनरूपम् । ७. हर्षात् । ८. ब्रह्मण आरभ्य । ९. आङ्गिरसगोत्रोद्भवोऽसि १०. अङ्गिरस्सन्ततिः । ११. विच्छिन्नम्-प्राशस्त्यरहितमिति यावत । १२. निर्भीतस्सन् आगच्छेत्यन्वयः । अथवा अभयं दीयत इति वा । १३. गोरूपधनम् । १४. प्रतिज्ञां करोमि । १५. त्वद्भिन्नसुतयोः शुनःपुच्छशुनोलाङ्गूलयोः । १६. भागयोग्यम् । १७. केन वा प्रकारेण न भवतीत्यर्थः । १८. उपदिष्टः शुनश्शेपः । १९. नाङ्गीचकार ।

नीचोऽसि त्वं कृतधनहृदयो[1] घातुको[2] मन्निमित्तम्[3] ।
शौद्रं[4] वृत्तं स्वयमधिगतवान्[5] खड्गहस्तोऽपि[6] भूत्वा ।
चण्डालास्ते[7] सदयवरगुणास्त्वत्त एवेत्यनिंदत[9] ॥ ९ ॥

श्रुत्वा निंदां[10] निजतनयकृतां पापकार्येण[11] लब्धां
सोऽजीगर्तः पुनरपि तनयं प्रार्थयामास[12] दीनः[13] ।

---

१. धने हृदयं (अभिलाषः) कृतं येन सः । धनमेव प्रमुखं न तु सुत इति धिया सुतं मां विक्रीय धनमधिगतवान्, अत एव त्वं नीच इत्याकूतम् । २. सुतं मामालब्धुमप्युद्यतः । अत एव घातुकः-हिंसकस्त्वम् । ३. मदर्थम् । मयि जाते सति खलु त्वयि त्वमेवंभूत इत्यवहेलनवचनम् । ४. शूद्रजनसंबंधि । शूद्राः खलु युक्तायुक्तज्ञानराहित्येन अहिंसातत्त्वतिरस्कारेण च हिंसाकार्येषु प्रायशः प्रवर्तंते - त्वमपि तद्वृत्तमनुसृतवानिति मर्मभेदवचनम् । ५. अत्र स्वेनैव नत्वन्यप्रेरणया इति वचनं ब्राह्मणो भूत्वापि श्रुतिस्मृत्युक्तधर्मान्विदित्वापि विशेषतो मम जनको भूत्वापि, मय्येव निर्घृणो भवसीति पितुर्नैच्यप्रतिष्ठानुसंधानद्योतकं हृदयदारककठिनस्वभावसूचकं भवति । ६. खड्गहस्तोपि भूत्वा इत्यनेन पुत्रघ्न इत्यभिप्रायः प्रदर्शितः । ७. ते इति लोके प्रसिद्धाः जातिचण्डालाः त्वत्तोपि श्रेष्ठाः । कथम् ? ८. ते कस्यचिद्वधे नियुक्ता अपि सदयाः कदाचित्कथंचित्कारुण्येन पूरिताः वधं न कुर्युः-अत एव वरगुणाः श्रेष्ठगुणाः- सुगुणेन युक्ता इति भावः । ९. अवहेलनं चकारेत्यर्थः । १०. पुत्रकृतगर्हणाम् । ११. स्वकृतपापकृत्येन लब्धाम् । १२. अभ्यर्थितवान् । १३. अतिनम्रो भूत्वेत्यर्थः ।

दुष्कृत्यं[1] मामनुतपति[2] भयाद्रक्ष मां स्निग्धभावा[3]-
दायाहि[4] त्वं तव गृहमचिराद्गोसमूह[5]स्त्वदीयः ॥२०॥
पापात्[6]पापं कुरुत इह कुधीः[7] पापचारी[8] तथा त्वं
रौद्रं[9] कर्म त्वयि निभृत[10]महो[11] निष्कृति[12]र्नाऽत्र तेऽस्ति ।
संधेयस्[13]त्वं न भवसि न मुधा[14] तामसोक्त्या[15] फलं ते
तैक्ष्ण्ये[16]ऽग्नेरनुभव[17]विदिते कस्स्पृशे[18]त्तं तु भूयः[19] ॥२१॥

---

१. मयाचरितं निंदितकार्यम् । २. मम हृदि संतापं करोति । "त्वया अकृत्यं कृतमिति ममात्मैव मे सूचयित्वा दुःखं जनयति" इत्यनुतापप्रदर्शनोक्तिः । ३. स्नेहभावेन । ४. एतावत्पर्यंतं यन्मम गृहमासीत्तदिदानीं तव गृहमेवास्ते तेन तदायाहीति स्वत्वाभिमानत्यागेन पुत्रस्य प्रेरणाय समुत्साहकरमिदं वचनम् । अत्र (अहङ्कारममकारत्यागो ध्वन्यते ।) ५. न केवलं गृहं तव गोधनमपि त्वदीयमेवेति पुत्रस्य स्वामित्वावहोक्तिः । एतावत्पितृवचनम् । इतः परं पुत्रस्योत्तरवचनम् । ६. एकं पापं यः कुरुते तद्वासनावशात् स एवान्यत् पापं करोति अनन्तरमन्यत अन्यस्मात्परमिति, पापकार्येष्वासक्तो भवति । कः ? । ७. कुधीः कुत्सिता कुमार्गं गता धीः बुद्धिर्यस्य सः-अविवेकीति यावत् । ८. तथैव त्वमपि पापकार्यनिरतः । ९. निंद्यं कर्म । १०. पूर्णं भवति । ११. अहो इति खेदे । १२. परिहारोपायः । १३. संधातुं योग्यः । १४. व्यर्थं । १५. तमःप्रधानभाषणेन । १६. दहनशक्तौ । १७. स्वानुभवेन निश्चिते । १८ तमेवाग्निम् । १९. पुनरपि । न कोपि स्पृशतीत्यर्थः ।

एवं वादा[1]नुगतमवद[2]द्देवरातं महर्षि
विश्वामित्रो न भवसि तनयो भीमकृ[3]त्यस्य तस्य[4] ।
सोऽसन्धेयो भव मम तनयो ज्ञानदीपप्रभावात्[5]
जह्यात्[6] को वा प्रियतम[7]सुधिया स्वाङ्कमारूढमार्यम्[8] ॥२२॥
ब्राह्मण्यं त्वं वरम[9]धिगतवान् क्षत्रियः पूर्वं[10] जात्या
वंशं तेऽद्याधिगमयसि[11] हि[12] मामङ्गिरोवंशजातम्[13] ।
कं वा मार्गं[14] कलयसि[15] वद मे संविधानाय[16] तस्मै
भीतिग्रस्तं[17] स्वजनमिह समाधातुमर्हत्यभीरः[18] ॥२३॥

---

१. एवं वदन्तम् । २. तमधिकृत्यावदत् । ३. भयंकर-कर्मणः। ४. अजीगर्तस्य । ५. ज्ञानदीपप्रभावात् त्वं मम सुतो भव जन्मना यद्यपि मम सुतो न भवसि तथापि मद्गोत्रमवलम्ब्य तव ज्ञानप्रभावेण मत्सदृशऋषिर्भूयाः इति विश्वामित्रस्याभिसंधिरत्राव-गम्यते । ६. त्यजेत् । ७. अयमेव प्रियतमः अत्यन्तहितचिन्तकः इति बुध्या यः स्वस्य अङ्कमारोहति-शरणागत इति यावत्-तादृशम् । ८. अर्यवृत्तेन भूषितम् - स्वाश्रितं को वा त्यजेत् - न कोऽपि त्यजतीति भावः। ९. श्रेष्ठम् । १०. पूर्वं जात्या त्वं क्षत्रियोऽपि-पूर्वं क्षत्रियवंशे जातस्त्वं स्वतपसा क्षिप्रं ब्राह्मण्यमधिगतवान् । अहं तु अङ्गिरोवंशजातः-इदानीं तव गोत्रं प्रविष्टः-त्वद्वंशजत्वेन भावितः। मम पूर्वगोत्रपरित्याग-पूर्वकं तव गोत्रानुसरणाय किं संविधानं जानासि वदेत्यभिसंधिः । ११. प्रापयसि । १२. निश्चितमिदम् । १३. अंगिरसां कुले संभूतम् । १४. उपायम् । १५. चिंतयसि ।१६. सम्यक् निर्वर्तनाय। १७.भयेन पीडितम्। १८. यः धीरः स स्वाश्रितस्य भयमपोढुं क्षम इति तात्पर्यम् ।

जानीहि त्वं मम तनयगणे ज्येष्ठ[1] एवासि सत्यं
तेषु त्वं भोः प्रथमसुत[2]धिया गण्यसे[3] गौरवेण[4] ।
भाज्यं[5] तेऽत्र स्वधनमपि समं[6] तैस्सगोत्रप्रतीत्या[7]
बुद्ध्वा वाक्यं मम हृदयकृतं[8] संशयं[9] त्वं जहीहि[10]॥२४॥

सम्यक् श्रुत्वा ऋषिवचन[11]मिदं देवरातो जगाद
त्वद्वाक्यार्थे[12] तव सुतनिचयास्सम्मतिं[13] द्योतयन्तु[14] ।
तेनाहं ते परिगणितसुतो[15] ज्येष्ठतागौरवात्ते[16]
वंशं[17] कीर्तिं[18] मदनुजकुशलं[19] यत्ततः[20] पालयामि ॥२५॥

---

१. प्रथमपुत्र इत्यत्र न कोऽपि संदेहः इति एवकारेण ध्वन्यते । २. मम पुत्रेषु त्वं ज्येष्ठ इति बुध्या । ३. संभाव्यसे । ४. पुरस्कारेण । ५. भागयोग्यं भवति । त्वं मद्धने विभागं प्राप्नोषीति तात्पर्यम् । ६. मम पुत्रेषु एकैकः यावद्धनं लभते त्वमपि तावल्लभसे इत्यर्थः । ७. बान्धवदृष्ट्या । ८. एतन्मम वाक्यं मनःपूर्वकं कृतम् । ९. तव मनस्सन्देहम् । १०. त्यज-ओहाक् त्यागे इति धातोर्लोटि मध्यमपुरुषैकवचने जहाहि जहिहि जहीहीति त्रीणि रूपाणि भवंति । ११. विश्वामित्रस्य वाक्यम् । १२. तव वाक्यस्याऽभिप्रायं सम्यग्बुद्ध्वा तस्मिन् । १३. स्वेषामनुमोदम् । १४. प्रकाशयंतु । १५. तव सुतेषु अहमप्येक इति परिभावितस्सन् । १६. ज्येष्ठपुत्र इति गौरवपर्यालोचनेन । १७. गोत्रं पालयामि । १८. त्वया ब्रह्मर्षिरिति समासादितकीर्तिं पालयामि । १९. मम अनुजानां त्वत्तस्संजातपुत्राणां योगक्षेमं च पालयामि । २०. जागरूकस्सन्-धर्मलोपभयादिति यावत् ।

तच्छ्रुत्वैकाधिकशततनयान् सोऽयमाहूय सर्वा-
नाह प्रीत्या भजत मम सुतेष्वेतमेवाद्यपुत्रम् ।
पंचाशत्ते पितृवचनमिदं ज्येष्ठपुत्रा विषण्णा
नाङ्गीचक्रुर्मुनिरयमथ तान् कोपयुक्तश्शशाप ॥२६॥

यूयम् यस्मात्स्वमतिकृतमते संनिविष्टा मदाज्ञां
दूरीकृत्य स्वमतिनिपुणताबोधमापादयध्वम् ।
युष्मज्जातास्तदिह सुविदिता नीचजातिप्रजाः स्यु-

---

१. तत् देवरातस्य वचनमाकर्ण्य । २. एकाधिकशतपुत्रान् । मम पुत्रेषु युष्मासु एतं देवरातम् आद्यपुत्रं प्रथमपुत्र (ज्येष्ठपुत्र) मिति यावत् ३. भावयत इति कृत्स्नवाक्यार्थः। ४. विमनस्काः, ज्येष्ठपुत्र इति भावयितुं वा, धने विभागं तस्मै दातुं वा असम्मता इत्यभिप्रायः। ५. स्वसम्मतिं न ददुरिति यावत् । ६. विश्वामित्रः। ७. क्रुद्धस्सन् । ८. ममाभिप्राये अनुमतिमदत्वा स्वेच्छया युष्मद्बुध्द्यापादिताऽभिप्राये। ९. सम्यक् निविष्टाः-स्थिताः-प्रत्यभिनिविष्टा इति यावत् । १०. तिरस्कृत्य-तृणवदविगणय्य । ११. मम बुद्धेरपि युष्माकं बुद्धिः प्रशस्ततरेति विजानन्तो भवथेति तात्पर्यम् । १२. दर्शयध्वम् । १३. युष्मत्तःउत्पन्नाः प्रजाः । १४. अन्ध्राः- पुण्ड्राः- शबराः- पुलिन्दाः- पूतिबाः- इति पञ्च नीचजातयः । तत्र अन्ध्राः अन्ध्रदेशस्थाः स तु देशः जगन्नाथादूर्ध्वभागादर्वाक् श्रीभ्रमरात्मकं यावदन्ध्राभिधो देशः इति ज्ञेयः । पुण्ड्राः पुण्ड्रदेशस्थाः । पुलिन्दाः पार्वतेयभेदाः । तद्वदेव शबराः। पूतिबाः के इति न ज्ञायते, प्रायः पूतिगन्धयोऽनार्या भवेयुर्वा ।

न्यक्कार[1]स्स्याद्गुरुजन[2]वचने भ्रष्टजन्म[3]प्रदायी ॥२७॥
पुत्राश्चा[4]न्ये वचन[5]मथ मधुच्छन्द[6]मुख्याः कनिष्ठाः
पितुरु[7]द्देशं प्रिय[8]मिह विदिता[9]ः पालयामासुराशु ।
भ्रातुः प्रीतौ पितुरपि च तथा नैजभा[10]वेन भूत्वा
लोके दीप्ता[11]ः प्रथितसुयश[12]सो वेदवेत्ता[13]र आसन् ॥२८॥
मन्त्रद्र[14]ष्टा समभवदम[15]लो देवरातो म[16]हीयान्
गोत्रत्राता[17] शमदमसु[18]गुणैर्भ्राजमा[19]नो मह[20]र्षिः ।
वि[21]श्वामित्रप्रकृतिरयमिति स्तुत्यकीर्तिं[22] च भेजे

---

१. धिक्कारः । २. ज्ञानवृद्धानां वचने । ३. नीचजन्मापादक इति यावत् । ४. इतरे एकपंचाशत्पुत्राः । ५. पितुर्वचनम् । ६. एतेषु मधुच्छन्दो नाम महर्षिः मन्त्रद्रष्टा प्रथमः। ७. पितुरभिप्रायम् । ८.तन्नः प्रियं श्रेयस्साधनम् । ९. अवगतवन्तः । १०. प्रकृत्या प्रेरितो यो भावः स नैजभावः तेन - स्निग्धभावेनेति यावत् । ११. विख्याताः । १२. प्रथितं सुयशः येषान्ते कीर्तिमन्त इति यावत् । १३. तेषु केचित् मन्त्रद्रष्टारः, अन्ये वेदविदः । १४. मन्त्रान् ईश्वरप्रेरणया ज्ञानदृशा पश्यतीति मन्त्रद्रष्टा । १५. गुणेन शीलेन आचारेण च परिशुद्धः । १६. महच्छब्दात् अतिशयार्थे ईयसुप्रत्ययः । कथमत्रातिशयार्थ उपपद्यते ? उच्यते ते कनिष्ठाः सर्वे महान्त एव तेभ्योऽप्यस्य ज्येष्ठस्य महत्त्वम् अधिकमिति तत्प्रयोगः । १७. वंशवृद्धिकरः। १८. शमदमतितिक्षाविरक्तिश्रद्धाऽऽस्तिक्यादिसुगुणैः। १९. देदीप्यमानः (ब्रह्मवर्चसेन) २०. महांश्चासौ ऋषिश्च महर्षिः। २१. विश्वामित्रस्य प्रकृतिरिव प्रकृतिः (स्वभावः) यस्य सः- तस्य प्रतिबिम्ब एव। २२. प्रशस्तकीर्तिम् ।

सद्भिस्संगा[1]द्भवति हि कुशलं[2] जन्मिनां[3] धर्ममार्गे[4] ॥२९॥
दृष्टान्तो[5]ऽर्थं श्रुतिविहित[6]कथाः काश्चिदत्रानु[7]बद्धाः
ब्रह्मर्षे[8]स्तत्सुचरितमखिलं शेषभूतं[9] यदन्यत् ।
नृणां[10] तावन्न भवति हि बलं वेदितुं बुद्धिशक्तेः[11]
कालेऽल्पे[12]ऽस्मिन् कलिकलित[13]धियां स्वास्थ्य[14]मास्थां[15] भवेत्किम्॥

---

१. सत्संगात् । २. क्षेमम् । ३. प्राणिनाम्-मनुष्याणामिति यावत् । ४. धर्मानुष्ठानविषये अत्र "सतां सद्भिः संगः कथमपि हि पुण्येन भवती"ति महाकविभवभूतिवाक्यम्, सत्संगत्वे निस्संगत्वं निसंगत्वे निर्मोहत्त्वं निर्मोहत्त्वे निश्चलतत्त्वं निश्चलतत्त्वे जीवन्मुक्तिरिति शङ्करभगवत्पादवाक्यं चानुसंधेये । ५. उदाहरणायेति यावत् । ६. श्रुतिषु प्रतिपादितोदन्ताः । ७. काव्यरूपेण रचिताः। ८. भवन्तु नाम बहवो ब्रह्मर्षयः । तेषु अयं प्रधानः स्वतपसाधिगतोपाधित्वात् इति यावत् । ९. अन्यत् सर्वम् उक्ताभ्यः कथाभ्यः अन्याः-इतराः याः कथाः- तास्सर्वाः। शेषभूता अवशिष्टाः-अत्रानुक्ता इति यावत् । विश्वामित्रसंबंधिनो वृत्तान्ताः बहवस्सन्ति । तान् सर्वानत्र वक्तुमशक्य मिति तात्पर्यम् । १०. मनुष्यमात्राणाम् । ११. धीशक्तेः । १२. "शतमानं भवति शतायुः पुरुष" इति श्रुतिनिर्दिष्टवयसि बहुभागः विषयलोलुपतया, प्रतिपदमापतितरोगादिभिर्ह्रियते अतः जीवितकालः अल्प एव तस्मिन् । १३. कलौ कलिना वा कलिता धीर्येषां तेषां निद्रातन्द्राकलहादिव्यापारेषु व्यापृतानाम् जनानाम् । १४. स्वस्थचित्तता । १५. वेदशास्त्रविचारेषु ऋषिजनप्रभावोद्भूततत्त्वार्थचिन्तनेषु च श्रद्धा ।

विश्वामित्रः ख्याततपस्वी[1] जगतीत्थं
मन्त्रद्रष्टा स्वर्ग विधाता जयतीत्थम्[2] ।
दीनत्राता[3] हीनसुधर्ता[4] भवतीत्थं
सप्तर्षीणां[5] मध्यगतो[6]ऽयं लसतीत्थम्[7] ॥३१॥

इति श्रीवेङ्कटरमणार्यविरचिते काव्यसमुदये वैदिके विश्वामित्रकाव्ये देवरातो-दन्तोनाम चतुर्थस्सर्गः। समाप्तमिदं विश्वामित्रकाव्यम् । ओं तत्सत् ।

---

१. तपांसि त्वनेके अकुर्वन् तत्र विशेषतः ख्यातः विश्वामित्र एव येन तपसा करणेनैव ब्राह्मण्यमपि साधितम् । २. सर्वोत्कर्षेण वर्तते । ३. दीनानां शुनश्शेपादीनां त्राता-रक्षकः । ४. हीनानां चंडालत्वावमृष्ट-त्रिशंक्वादीनाम् उद्धर्ता श्रेष्ठापदप्रापक इति यावत् । ५. कश्यपात्रिभरद्वाजविश्वामित्रगौतमजमदग्निवसिष्ठाख्येषु सप्तर्षिषु । ६. मध्यं गतः तैर्युक्तः-अथवा मध्ये चतुर्थस्थानं प्राप्तः । ७. प्रकाशते नक्षत्रमण्डले सर्वैरप्यद्यापि दर्शनीयः । अस्मिन् सर्गे सत्सङ्गप्रयोजनम्-ऋषिवाक्य-प्रभावः- सौभ्रात्रम् - पितृपुत्रधर्मः-इत्यादयः प्रतिपादिताः । अंतिमपद्यं मत्तमयूरवृत्तनिबद्धम् । तल्लक्षणम् “वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरम्”।

इति श्रीवेङ्कटरमणार्यप्रणीते काव्यसमुदये वैदिके विश्वामित्रकाव्ये देवरातोदन्तनामकचतुर्थसर्गस्य स्वेनैव रचिता गम्भीरपदार्थ-बोधिन्याख्या व्याख्या समाप्ता । समाप्ता विश्वामित्रकाव्यव्याख्या । ओं तत्सदिति ब्रह्मणो निर्देशः, काव्यस्यांते मङ्गलस्थानीयः अत्र सूक्ष्मदृशामादिमङ्गलमध्यमङ्गलान्त्यमङ्गलानि कविना श्रद्धया कृतानीत्येतत् ग्रन्थस्य निर्विघ्नतासम्पादनद्योतकमिति प्रतिभात्येव ।

ओम्

नमः परमात्मने

# अथ उमादर्शाख्ये तत्त्वार्थकाव्ये

## प्रथमस्सर्गः

इष्टदेवताप्रार्थनात्मकमङ्गलमुखेन उद्देशविन्यासः

---

**ओमित्युमेत्यभेदाख्यं ध्यात्वा तत्त्वं जगन्मयम्।**

---

ग्रंथादौ कविः ग्रंथस्य निर्विघ्नतासिद्धयर्थं सम्प्रदायमनुसृत्य इष्टदेवताप्रार्थनारूपं मङ्गलमाचरति। १. ओमिति-अकारः- उकारः मकारः इत्येतत्त्रयात्मकः ओङ्कारः। तथैव उकारः मकारः आकारः इत्येतत्त्रयात्मकः उमाशब्दः। उभयत्र वर्णत्रयसाम्यात् अभेदसंघटनं शब्दपर्यालोचनया। अर्थानुसन्धानेनापि अकारः उकारः- मकारः इत्येते क्रमेण ब्रह्म-विष्णु-महेश्वरबोधकाः। तेषां चैतन्यरूपं सद्वस्तु एकमेव। तथा उकारः मकारः आकारः (अकार एव आकारः) इत्येते क्रमेण लक्ष्मीगौरीवाणीस्वरूपबोधकज्ञानशक्तिक्रियाशक्ती-च्छाशक्तिरूपात्मकं शक्तिस्वरूपमेकमेव। तथैव यजुरारण्यके (प्र६ अ१९) "उमापतये नमो नमः" इत्यत्र....परशक्तिरूपेण स्थित प्रणवपर्यायार्थेन उमाशब्देनोच्यते इति भट्टभास्करेण व्याख्यातम्। शक्तिशक्तिमतोरभेदाध्यवसायेन एकमेवाभेदं ध्येयवस्तु संघटते। २, जगत्-ब्रह्मभिन्नं न भवतीति जगन्मयमित्युक्तम्।

न्याकुर्वेऽहमुमादर्शं कृष्णार्यस्मृतिगोचरम् ॥

अवतरणिका (पूर्वाङ्गम्)

आत्मानन्दसमं नास्ति सुखं वैषयिकं परम् ।
इति बोधयितुं तत्त्वं कथाभङ्ग्या जगाद सः ॥
हूणभाषामयी वाणी संस्कृता दिव्यया गिरा ।
संवदत्यत्र तत्त्वं देववाणी स्ववीणया ॥

---

१. रचयामीति तात्पर्यम् । २. कृष्णस्वामि ऐयर् इति यो वेदान्तविन्महाभागः तस्य बुध्या आंग्लभाषायां प्रकल्पितेयं कल्पना-कथेत्यत्रानुसन्धेयम् । कृष्णार्यस्मृतिगोचरमितिपदेन अर्थान्तरोऽप्यनुसन्धीयेत । यथा-कृष्णः-भगवान् श्रीकृष्णः तस्य आर्या-निर्दुष्टा स्मृतिः-भगवद्गीतेति जगत्प्रसिद्धा स्मृतिरूपा कृतिः । तस्यां गोचरं-तत्रोक्ततत्व-मिति यावत् । ३. अत्मानन्दसमम्-आत्मानन्दः नित्यत्मनः नित्यानन्दरूपं सुखमिति द्वैतभावनया वा आत्मैव नित्यानन्दरूपः तद्रूपं सुख-मित्यद्वैतभावनया वा अर्थोऽत्रोपपद्यते । ४. विषयसम्बन्धिलोकविदितं सुखमिति यावत् ।५. तत्त्वम्-तस्य भावः तत्त्वम् । तत्पदार्थ एव सत्पदार्थः-तत् सत्यम् अबाध्यम् । ६. कल्पितकथारीत्या । ७. कृष्णार्यः । तद्भाषया प्रथमं रचितेयं कथेत्यभिप्रायः । ८. आंग्लेयानां हूणा इति रूढ्या प्रसिद्धिः। तेषां भाषा आंग्लभाषा । ९. संस्कृता-संस्कृतभाषया विरचिता । १०. दिव्यया गिरा देववाण्या । देवानां भाषा वेदभाषा । सा च संस्कृतभाषैव।११. यथा मूलम् अर्थप्रकाशं करोति ।१२. सरस्वती । १३.सरस्वती स्ववीणाक्वणनेनाविर्भूतं तत्त्वं स्वमुखोच्चरितगानरीत्या यथा अनुवदति तथा हूणभाषया उदितं संस्कृतभाषया प्रकाशयामीति भावः ।

## काव्यकथारम्भः

उमा शिवेन स्वयमात्तमोदा निर्व्याजमैच्छत् कलहं यमेतम्।
श्रुत्याभिमुख्यं भुवनेषु नेतुं सम्प्रार्थये देवि सुवाङ्मयि त्वाम्॥१॥

१. अर्धनारीश्वरभावनया वा शिवेनाभिन्ना शिवेति भावनया वा स्वयमिति निर्देशः । अर्धनारीश्वरतत्त्वमेवमुक्तं मनुना - "द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् । अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः ।" तथैवान्यत्र "यामामनन्ति मुनयः प्रकृतिं पुराणीं विद्येति यां श्रुतिरहस्यविदो वदन्ति । तामर्धपल्लवितशङ्कररूपमुद्रां देवीमनन्यशरणश्शरणं प्रपद्ये" इति अम्बास्तवे श्रीशङ्कराचार्याः । "शिवस्त्वं .... पृथक्त्वं त्वत्तो भगवति न वीक्षामह इमे" इति च तैरेव सकलजननीस्तुतौ उक्तम् । २. स्वयमानन्दरूपापि लीलार्थं पत्नीभावमासाद्य पत्या नित्य सुखरूपेण शिवेन सह प्राप्तः मोदः यस्यास्सा । ३. निमित्तं विना। ४. जनानां श्रुतेः-श्रवणस्य श्रोत्रस्य वा आभिमुख्यं प्रत्यक्षताम् । श्रुतेः- वेदस्य आभिमुख्यम् - अभिमतमिति अर्थश्लेषः ५. अकारादयो वर्णाः । वर्णसङ्घातः पदम् । पदसमूहो वाक्यम् अर्थपरिसमाप्तौ । वाक्यरूपाणि वाङ्मयानि । तच्छक्तिरूपाधिदेवता वाङ्मयी । स्वस्य कृतिकार्यानुकूला सा सुवाङ्मयी । तस्याः सम्बुद्धिः सुवाङ्मयि - हे वाग्देवते । सरस्वति इति तात्पर्यम् ।

**ययौ कदाचिन्मुनिनारदो[१]ऽसौ कैलासलोकं महतीं[२] दधानः ।**
**हितार्थ[३]मिच्छन् कलहं सदा यो गान्धर्वनेता[४] कृततत्त्वबोधः[५] ॥२॥**
**उमा सहर्षाऽतिथि[६]मागतं तं सभाजयामास[७] युतार्घ्यपाद्यैः[८] ।**

---

१. मुनिश्चासौ नारदश्च मुनिनारदः । मौनान्मुनिरिति सामान्यार्थः । नारदस्तु सदा लोकसञ्चारी लोकहितार्थं बहुल बहुभिर्भाषमाणः अथवा भगवन्महिमोपदेशकः । तस्य मुनित्वं कथमुपपद्यत इति चेत् - उच्यते - मन् धातोः इन् उच्च ( उणादि ४-१२० ) तपस्वी-भगवन्महिमवित्-तत्त्वविदिति समाधानम् । अष्टादशपुराणानां कर्ता व्यासोऽपि मुनिरेव "मुनीनामप्यहं व्यासः-" इति स्मरणात् (भगवद्गीता १०-३७) व्याससदृश इति भावः । अथवा-"दुःखेष्वनुद्विग्नमनास्सुखेषु विगतस्पृहः । वीतरागभयक्रोधस्स्थिरधीर्मुनिरुच्यते" इति । नारदोऽपि तादृशः। २. विपञ्ची-कच्छपी बृहती महती इत्यादिवीणाभेदाः विश्वावसुसरस्वतीतुम्बुरनारदप्रभृतिभिरुपयुक्ताः। तासु महती नाम वीणा नारदेन सन्धारितेति यावत् । ३. लोकक्षेमार्थम् ४. गान्धर्ववेदविदां प्रधानः सङ्गीतकुशल इति यावत् । ५. कृतः-जनेभ्यः वितीर्णः तत्वबोधः-परमार्थोपदेशः येन सः । ६. "एकरात्रं तु निवसन्नतिथिर्ब्राह्मणस्स्मृतः । अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते" इति मनुः (३-११२)। अतति गच्छति-अत सान्तत्यगमने इति धातोः 'इथिन्' प्रत्ययः। अत्र प्रकरणे अतिथिर्नारदः । ७. सन्तर्पयामास । ८. अर्घ्यम्-अर्घः पूजाविधिः तदर्थं द्रव्यम् अर्घ्यम् । "आपः क्षीरं कुशाग्रं च दधि सर्पिस्सतण्डुलम् । यवस्सिद्धार्थकश्चैव ह्यष्टाङ्गोऽर्घः प्रकीर्तितः-" इति याज्ञवल्क्यः । पाद्यम्-पादप्रक्षालनार्थं शुद्धोदकम् ।

दृष्ट्वा मुनिं तत्र शिवे सहासे[1] तद्गूढभावं[2] न बुबोध सैषा ॥३॥
प्रासादभागांस्तमुमा निनाय[3] प्रदर्शयन्त्यद्भुतवस्तुजातम्[4] ।
फलानि रस्यानि सुभोज्यमन्नं[5] समर्पयामास सुधां च तस्मै ॥४॥
आतिथ्यकृत्यान्मुनिरात्तहर्षस्तामातिथेयीं[8] बहुधा शशंस ।
आदर्शवस्तूपहितं[9] भवेच्चेदादर्शनीयं[10] गृहमित्युवाच ॥५॥
आदर्शको[11] द्वारमहो ! विचित्रलोकस्य यद्देवनराद्यभेद्यम्[12] ।

---

१. हास्ययुक्ते सति । हासस्तु-अयमत्रागतो नारदः कंचित् कलह-व्यापारं करोत्येवेत्यन्तर्भावनया जनितः वक्त्रनेत्रविकासरूपो बहिर्व्यापाररूपः। २. तस्य अन्तर्भावम् ।३. द्विकर्मकक्रियापदम् । ४. त्रिलोकनाथस्य प्रासादे विद्यमानानि समस्तवस्तूनि विचित्राणि आश्चर्यकराण्येव, असाधारणरूपवत्त्वात् । ५. सुखेन भोक्तुं योग्यम् "खण्डजीरकघृताम्लसैन्धवस्वादुसूपमरिचादिसंस्कृतैर्व्यञ्जनैस्सह बहूपदंशकैस्सम्पादितमोदनमित्यर्थः। ६. सुधाम्-अमृतम् । शिवः चन्द्रशेखरः । शिवा च बालेन्दुधरा चन्द्रश्च अमृतकलापरिपूर्णः। तस्मादत्र अमृतप्राप्तेरस्ति सुलभावकाश इत्यभिसन्धिः । ७. अतिथिसत्कारात् । ८. अतिथिषु साध्वी आतिथेयी तां पार्वतीम् । ९. दर्पणाख्यवस्तुना युक्तं चेत् । १०. इदं गृहं द्रष्टुम् इतोऽपि रमणीयतरं भवतीत्याकूतम् । ११. यः प्रतिबिम्बं दर्शयति सः आदर्शः । आदर्श एव आदर्शकः-प्रशंसार्थे कप्रत्ययः। सर्वोत्तमं तव रूपं सुस्पष्टं दर्शयितुं योग्य इति यावत। १२. दूरदर्शकसूक्ष्मदर्शकादिरूपदर्पणाः खलु प्रकृतिविचित्रविषयानवगन्तुं मुख्यसाधनान्यपि सामान्यजनानां तच्च प्रकृतिवैचित्र्यं सामान्यदृष्टेरग्राह्यम् । तथा स्वरूपसाक्षात्कारः येन दिव्यदर्पणसदृशेन आत्मज्ञानेन भवति तादृशं ज्ञानं देवानामपि दुर्लभमित्याशयेन देवनराद्यभेद्यमित्युक्तम् ।

आदर्शयेत्ते निजबिम्बमार्ये[१] नान्यद्विनादर्शमभेदरूपम्[३] ॥६॥
संबोध्य[४] देवीं स महर्षिरेवं जगाम वेगेन विवादभीत्या[५] ।
उमा जगामाथ शिवं च साक्षादादर्शधीजन्यकुतूहलेन[६] ॥७॥
हे प्राणनाथेश[७] सदा मया त्वं संप्रार्थितो दर्पणलाभहेतोः[८] ।
रात्रिंदिवं तस्य विचिन्तनान्मे चित्तं समाधातुमशक्यमास्ते[९] ॥८॥
आदर्शदानेन कुरु प्रसादं प्रिय प्रियं रूपमभीक्षितुं मे ।

---

१, तव मुखप्रतिबिम्बमिति स्थूलार्थः। सूक्ष्मार्थस्तु-आत्मस्वरूपमिति। साक्षाज्जगज्जनन्यास्तव स्वरूपम् अत्यद्भुतं देवनरादिभिरपि वेदितुमशक्यम् । तदविज्ञाय सामान्यस्त्रीवत् गृहे स्थितानि वस्तूनि मह्यं प्रदर्शयसीति नारदेन कृतस्तत्वोपदेश इति सुधीभिरून्नेयम् । २, ऋ गतौ इत्यस्माद्धातोण्यंन्तं रूपम्-सर्वं व्याप्नोतीति तात्पर्यम्। त्वं सर्वव्यापिनी जगत्स्वरूपिणीति मनसि कृत्वा आर्ये इति सम्बोधनं कृतम् । ३, अखण्डाद्वैतरूपमिति तत्वार्थः । ४, सम्यगुपदिश्य । ५, यदि चिरमत्र स्थीयते तदा शिवेन सह विवादो भवत्येव । स मा भूदिति बुद्ध्या । ६, येन केन प्रकारेणापि नारदेनापेक्षितः आदर्शः सम्पादनीय इति मत्या कलितभावेन । ७, हे प्राणनाथ-मम प्राणेश्वर । आदर्शसंग्रहणं विना मम प्राणाः न तिष्ठन्ति । तत्सम्पादनेन मम प्राणान्रक्षितुं त्वमेव समर्थ इति ध्वनिः । ईश इति सम्बोधनेन त्वं कर्तुमकर्तुमन्यथा कर्तुं च समर्थः । आदर्शसंग्रहणकार्यं किं नाम तव ? अकिञ्चिदित्याकूतं ध्वनितं भवति । ८, आदर्शाधिगमाय । ९, समाश्वासयितुम् ।

मद्रूपसम्पत्[1]सुमनोहरे[2]ति यत्त्वं सदा शंससि देवदेव ! ॥९॥
प्रदर्शनीया[3] निजरूपभासो[4] ममेत्यहं त्वां सुचिराद्याचे ।
तथापि नालक्षयसीह मां त्वं कृशां[5] सुदीनां[6] बहु खिद्यमानाम्[7]॥
साध्यं न किं साधयितुं ममेष्टं प्रिय प्रभो ते जगतां विधातुः[8] ।
न्यूनं[9] तव प्रेम मयीति नूनं मुमोच बाष्पं सुदती वदन्ती॥११॥
आक्षेपमेतं समुपेक्षितुं स प्रभुर्न सेहे संरुजो[10] ह्युमायाः ।

---

१. मम रूपलावण्यम् । २. सर्वमनोहरा । अतः पार्वत्याः त्रिलोकसुन्दरी सौन्दर्यलहरीत्यादिनामानि । यथाह श्रीशङ्करः-"त्वदीयानां भासां प्रतिफलनरागारुणतया शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ।" (सौन्दर्यलहरी - श्लोक १०.) "अराला (वक्रा) केशेषु प्रकृतिसरला मन्दहसिते शिरीषाभा (अतिमृद्वी) चित्ते दृषदुपलशोभा कुचतटे । भृशं तन्वी मध्ये पृथुरुरसिजारोहविषये जगत्त्रातुं शम्भोर्जयति करुणा काचिदरुणा" (तत्रैव श्लो १३) ३. त्वया कर्त्रा आदर्शद्वारा करणेन मह्यं प्रकाशनीयाः । काः ? । ४. मम निजस्वरूपप्रभाः । ५. आदर्शानधिगमव्यथया अन्नपानवर्जनात् अस्याः शरीरे कार्श्यरूपो विकारो जातः तद्वतीम् । ६. तत्कारणेनैव मनसस्स्थैर्याभावात् सा दैन्यभावमापद्यते इति भावः । ७. बहुप्रकारेण शोचन्तीम् । ८. स्रष्टुः । ९. ह्रासितम्-भार्यायाः अपेक्षां भर्ता न साधयति चेत् तस्य तस्यां प्रेमभावः नास्तीत्याक्षेपकरणं स्त्रीणं स्वाभाविकम् । १०. सव्यथायाः ।

मां क्षेपय त्वं प्रियवत्सले[2] ! मामित्याह किञ्चिद्भगवान् विहस्य ॥
कदापि नाहं कथयाम्यतथ्यं विश्वास्यमेतत्[3] सततं शुभाङ्गि ! ।
आदर्शकाचा[4] न हि दर्शयेयुस्सुसूक्ष्मरूपं[5] तव चानवद्यम्[6] ॥१३॥
समस्तलोकेषु नरामराणां विचार्य यत्नेन मनोहराणि ।
रूपाणि पश्यामि न कुत्र देवि ! त्वद्रूपसाम्यं[7] प्रकृतिप्रवाहे[8] ॥१४॥
वनेषु दुर्गेषु च पत्तनेषु क्षेत्रेष्वथाब्धिष्वथ कन्दरेषु ।
शिलोच्चयारामसुखस्थलीषु[9-10] स्वयं प्रविश्यालमवेहि तत्त्वम्[11] ॥१५॥
सर्गेषु सर्वेषु न पश्यसि त्वं त्वद्रूपसाम्यं निजबोधरूपम्[12] ।
जडं हि रत्नं[13] समलो मणिश्च[14] त्वद्रूपबिम्बग्रहणाय नालम्[15]॥१६॥

---

१. एवमाक्षेपणमयुक्तम् । २. प्रियवत्सले इति सम्बोधनेन तस्य तस्यां प्रेमभावः सम्पूर्णो भवतीति सूचितम् । ३. अहम् अनथ्यं कदापि न कथयामीत्येषः अभिप्रायः विश्वास्यः त्वयेत्यभिप्रायः । ४. मणि-काचादिरूपाः पदार्थाः। ५. इन्द्रियगोचरं यन्न भवति तदित्यर्थः । ६. तत् निर्दुष्टम् । केवलसत्वोपादानात्-अथवा सद्रूपत्वात् । ७. तव रूपस्योप-मानम्। ८. जगतीस्थलेषु। ९-१०.गिरिकाननादिप्रदेशेषु।११.यथार्थ-स्थितिम् । १२. केवलज्ञानरूपम्-चिद्रूपमित्यर्थः । १३. रत्नेषु यद्यपि थाळथल्यमस्ति तस्मात्तानि दर्पणाकारेण निर्मितानि चेत् बिम्बग्रहणे शक्तानि भवन्ति । तथापि तानि जडान्येव-चेतनाभावात् । सचेतनेनैव स्वस्वरूपं ज्ञातुं शक्यते इत्यभिप्रायः । १४. सूर्यकान्तचन्द्रकान्तादि-मणिदर्पणानि च तेनैव कारणेन स्वरूपं दर्शयितुं न प्रभवन्तीति तात्पर्यम् । १५. न प्रभवति ।

जग्राह सोसा न तदर्थमेतं[1] मोहादतृप्ता क्षणमात्रमाह ।
गवेषयाम्यद्य जगत्प्रदेशे प्रदेह्यनुज्ञां जगदीश मह्यम् ॥१७॥
नव्यैश्च भावैः परिचिन्तनैस्सा व्युड्डीय कैलासगिरेश्शुकीव ।
इयायँ ताराग्रहमण्डलं यत् तेजोनिदानं भवतीव दीप्तम् ॥१८॥
हृन्नेत्रतोषं न ददौ हि तस्यै तद्दर्शनं जाड्यमितीह सर्वम् ।
विभाव्य सोवाच न मत्समं तद्यत्प्राणचैतन्यविशेषिताऽहम् ॥१९

१. एतत्तत्त्वार्थम्-त्वं तत्र निजस्वरूपं समाधौ स्थित्वा जानासि न त्वन्यसहायेनेति भवः। २. अज्ञानात् बाह्यविषयाविष्टचेतस्कत्वात्। ३. यत्र कुत्रचिद्वा मम स्वरूपग्रहणसाधकं वस्तु अस्ति वा नवेति-स्वयं लोकेषु सञ्चार्य जानामीति यावत्। ४. जगतीतले मम स्वरूपावबोधकः पदार्थाः कुत्रचिद्वाधिगम्यते। तेन मम सुखं जायते इत्यादिभावैः। ५. कुत्र प्रथामं गन्तव्यम्। तत्र के पदार्थाः द्रष्टव्याः। तेषु केन मम प्रयोजनं भवेदित्यादीनि परिचिन्तनानि तैः। ६. यथा-शुकपक्षी भूमेरुच्चस्थानं वृक्षादिकं प्रति उड्डयते उपरि गच्छति तद्वत्। अत्र शुकीति स्त्रीलिङ्गप्रयोगःस्त्रीव्यक्तेरुपमानार्थबोधकः। स्त्रीणां पक्षिजातिषु शुका एव अतिप्रियाः इत्यत्र शुकग्रहणम्। ७. इण् धातोः लिटि प्रयोगः। ८. नक्षत्रमण्डलं- व्योमेति यावत् यत्र सन्ति देदीप्यमानाः नक्षत्रग्रहादयः। ९. ज्योतिर्मयमिति यावत्। १०. अचेतनत्वात्। ११. यस्मात्कारणादहं प्राणवती - चेतनावती तस्मादिति तात्पर्यम्।

क्वेदं क्रियोपाधिविकारजातं[1] क्व बोधरूपो[2] मम निर्मलात्मा ।
विविक्तवासा[3]स्सुखलेशशून्या[4] राजन्ति निश्चित्तजडान्धताराः[5] ॥
वृथैव[6] तेजो बत तारकाणां भवन्ति येनैव हि भस्मसात्ताः[7] ।
सचेतनो[8] जन्मवतां वरीयान् एभ्योऽपि शोकाभिहतोऽपि[9] नूनम् ॥
इत्थं समालोच्य ध्रुवं जगाहे लब्धुं क्षणादेव मनोरथं सा ।
विश्रान्ति[10]रेकत्र कुतोऽलिमौले[11]ः पुष्पप्रकाण्डा[12]न्मकरन्दमिच्छोः[13] ॥

---

१. सर्वं क्रियोपाधिकं-क्रियाश्रय इति यावत् । "न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्" इतिस्मृति प्रमाणात् । २. आत्मा तु केवलं ज्ञानस्वरूपः न तत्र क्रियाकारकादिव्यवहारः । ३. सर्वे प्रत्येकं प्रत्येकं वसन्ति न तु अखण्डरूपेण । ४. अत एव तेषां अल्पमपि निजसुखं न भवतीत्याकूतम् । ५. निर्गतं चित्तं येभ्यस्ते - निश्चित्तत्वादेव जडाः । न प्रज्ञावन्त इति यावत्-तस्मादेव अन्धाः- विवेकशून्याः । ६. निष्प्रयोजनमित्यर्थः । ७. अस्तिचेत्तेषां तेजःप्रयोजनं तत्परस्परं भस्मीकर्तुमेव । नक्षत्राणां व्यापारगतिविशेषेण कदाचित् कानिचिन्नक्षत्राणि पतन्तीति प्रसिद्धिः । ८. चेतनावान् । ९. दरिद्रो वा व्यसनी वा रुग्णो वा भवतु स अचेतनपदार्थात्-श्रेयान् इति तात्पर्यम् । १०. स्थितिः । ११. भृङ्गराजस्य । १२. अनेकविधपुष्पेभ्य इति यावत् । १३. मधुपानासक्तस्य । प्रयत्नशीलः सर्वदा स्वोद्दिष्टं कार्यं कुर्वन्नेव वर्तते । न विश्रान्तिसुखमपेक्षते । विश्रान्तिसुखमग्नस्य स्वोद्दिष्टकार्यनिर्वर्तने न केवलं कालविलम्बः अपि तु कार्यकरणे औदासीन्यं च जायते । यथा - निद्रालोः सन्ध्यादिकार्यनिमित्तं ब्राह्मे मुहूर्ते उत्थाने उपेक्षा इति विमर्शः ।

तुषारश्रृङ्गं[1] प्रथमं गिरीन्द्रं सानुप्ररूढाखिलवृक्षगुल्मम्[2] ।
प्रविश्य तस्थौ चिरमायताक्षी कालं[3] तिरस्कृत्य सदा विभान्तम्॥
शिलोच्चया निर्झरवारिपाता स्सरांसि कूलद्रुमशोभितानि ।
वनान्यभेद्यानि[4] च सान्द्रवृक्षैर्व्याघ्रादिसत्वारवघोषितानि ॥२४॥
इन्द्राक्षिसंकाशसहस्रचक्रवर्णोज्ज्वलद्बर्हधरा[6] मयूराः ।
हंसाश्शुकास्सारसपक्षिमुख्यास्तद्दृष्टिमार्गे समुपेयुराराद् ॥२५॥
एतैश्च बाह्यैर्निनदैः प्रकाशैरापान्तरात्मा न हि तृप्तिमस्याः ।

१. सर्वदा हिमाच्छादितशिखरम् इति अङ्गभूतश्रृङ्गग्रहणेन अङ्गी हिमालयपर्वतः गृह्यते । २. हिमालयपर्वतानां सानुषु अनेके ओषधि - वनस्पत्यादयः-औषधनिष्पादनोचितान्यनेकमूलत्वक्पर्णादीनि पदार्थजातानि लभ्यन्ते इति प्रसिद्धिः । ३. कालप्रभावात्सर्वेषां वृद्धि-ह्रासादयस्सम्भवन्ति । हिमालयविषये सदा हिमेन आच्छादितत्वात् बहुकालादेकरूपता दृश्यत इत्यभिप्रायः । हिमाच्छादनमपि गङ्गादिन-दीनां निरन्तरप्रस्रवणाय प्रयोजनकरमेव । अत एवोक्तं कालिदास-महाकविना—"हिमं न सौभाग्यविलोपि जातम्" इति । ४. गहना-नीति यावत् । ५. आदिशब्देन सिंहगजमृगखगादयो गृह्यन्ते । ६. इन्द्रस्य सहस्राक्ष इति कारणान्तरेण व्यपदेशः । तद्वत् मयूर-बर्हेषु अनेके चक्राकाराः नानावर्णाः अक्षिरूपा बिन्दवो वर्तन्त इति उपमार्थः । इन्द्रस्य अक्षीणि तैस्सदृशानि सहस्रसंख्याकानि चक्राकाराणि वर्णैरुज्ज्वलन्ति बर्हाणि तेषां धरा इति विग्रहवाक्य-प्रणालिका ज्ञेयात्र ।

जिघ्रन्ति[1] गन्धं न हि वृक्षसङ्घास्स्पर्शं[2]न जानन्ति दरीमहीध्राः ॥
खगा न जानन्ति न मारुताश्च विवेकशून्या ननु गानसारम्[3] ।
बाह्यानि रूपाणि विशन्ति नान्तः रम्याणि[4] दिव्यान्यपि[5] मेऽन्तरङ्गम्[6]॥
इत्थं गिरन्ती व्रजति स्म वेगात् स्थिरप्रतिज्ञाऽऽत्मसुखार्थिनी[7] सा ।
रिङ्गत्तरङ्गावलिलब्धकान्तिं[8] रत्नाकरं[9] रत्नपरीक्षिकेव[10] ॥२८॥
यस्याम्बुमध्ये विनिगूहितानि[11] प्रत्नानि[12] रत्नानि कलेवराणि[13] ।

१. वृक्षेषु गन्धो वर्तते । तं वृक्षाः न जिघ्रन्ति । ज्ञानाभावात् । २. तथा पर्वतादिषु स्प्रष्टव्याः पदार्थाः अनेके भवन्ति । तथापि ते पर्वतादयः तेषां स्पर्शं न विदन्ति-प्रज्ञाशून्यत्वात् । ३. खगाः पिक-शुकसारिकादयः गायन्ति । कदाचित् मारुताश्च-वेणुरन्ध्रादिद्वारा गान-सदृशं ध्वनिमुत्पादयन्ति । तथापि ते गानरहस्यं जानन्ति किम् ? न जानन्त्येव । विवेचनाशक्त्यभावात्-इत्याशयः । ४. दर्शनीयानि । ५. तेजसा समुज्ज्वलितानि । ६. मानसम् । ७. स्वरूपज्ञानसुखमपेक्ष-माणा ।८. रिङ्गन्तश्च ते तरङ्गाश्च तेषाम् आवलिः तया लब्धा कान्तिः यस्य सः तम् । ९. समुद्रम् । १०. रत्नपरीक्षानिपुणाः स्त्रीपुरुषाः समुद्रादधिगम्यमानानां रत्नानां परीक्षार्थम् - यथा समुद्रमभिगच्छन्ति तथैवेत्युत्प्रेक्षा । ११. गुप्तानि - अधस्तले निहितानीति यावत् । १२. पुराणानि-श्रेष्ठानि । १३. मृतजलजन्तूनां मत्स्यमकरादीनाम् अस्थिपञ्जरादीनि । अत्र विनिगूहितानि इत्यनेन कलेवराणाम् अचलनं सूचितम् । अतः मृतानां जलचराणामिति ध्वनिः । तस्मात्कलेवरशब्दस्य अर्थसङ्कोचः अस्थिपदार्थे ।

यादां[1]स्यधस्तान्निवसन्त्युतोऽर्ध्वं जलप्रणाल्या[2] विचलन्ति तोये ॥
इदं स्थलं किं न हि दृष्टपूर्वं[3] स्वर्गोपमं भाति विचारदृष्टेः[4] ।
प्रधान[5]सृष्टेर्महिमार्धमस्मिन् वि[6]मूर्च्छतीत्याह सुविस्मिता सा ॥३०

क्रीडन्ति नग्नाप्सरसोऽत्र मोदात् क्षणं निमग्नाः[7] क्षणमुत्प्लवोत्थाः[8] ।
स्पर्धा[9]क्षमा जातु तथापि नेमा विवेक[10]हीना यदमूर्भवन्ति ॥३१॥

उत्थाय सिन्धोर्धरणीतलेषु प्रत्याशया तूर्णमधात् समीक्षाम्[11] ।
पुरीषु रम्यासु च पत्तनेषु स्तुत्य[12]प्रजास्तोमविराजितेषु ॥३२॥

---

१. जलजन्तवः । २. जलजन्तूनां चलनवशात् यथा यथा जलस्याधोभागाः उपरि गच्छन्ति तथा तथा जलजन्तवोऽपिताननुसृत्य उपर्युपरि प्लवन्ते इत्यभिप्रायः । ३. पूर्वं न दृष्टम् । ४. सूक्ष्मदृष्ट्या विचारिते इत्यर्थः । ५. प्रधानसृष्टिः- पञ्चमहाभूतसृष्टिः तस्याः । ६. विलसति । ७. जलान्तः-प्रविष्टाः । ८. उत्प्लवेन ऊर्ध्वगत्या उत्थाः- जलस्योपरि गताः । ९. स्पर्धितुम्-सुखिन्य इति भावयितुं न योग्याः । १०. विवेकरहिताः । कुतः ? जलक्रीडैव परमसुखमिति मन्यन्ते एताः- नतु स्वरूपज्ञानमिति हेतोः । ११. दृष्टिम् - अन्यत्र गन्तुं मतिं चकारेत्यर्थः । १२. स्तुत्याश्च ताः प्रजाश्च - तासां स्तोमः- तेन विराजितानि - पत्तनानि - तेषु - श्लाघ्योद्यमशालिजनभरितेष्विति यावत् ।

आस्येऽमरौके सदिरोपदेशे हीराकराढ्ये च तथाऽपरौके ।
द्राक्षाकदम्बैस्सततं परीते प्रत्यन्तरीपेऽच्छहरिद्रुमाभे ॥२३॥

१. भूदेवतायाः आस्यम्-मुखमिव स्थिते भूभागे "एषियाखण्ड" इत्यभिधाने भरतवर्षे इति तात्पर्यम् नववर्षेषु भरतवर्षः प्रधानतम इति मत्वा "आस्ये" इति प्रथमतो निर्देशः। २. अमराणां *ओके सुखभूयिष्ठे इतितात्पर्यम्। "अमेरिका" खण्ड इति प्रसिद्धे भूभागे। ३. इरायाः उपदेशः उपदेशस्थानम्। संश्चासौ इरोपदेशश्च-तस्मिन्। इतरदेशानां उपेदशभूते भूभागे-"यूरोप"खण्डाख्ये इत्यर्थः। ४. हीराकराढ्ये-वज्राणाम् आकराः खनिप्रदेशाः तैर्भरिते। ५. अपरश्चासौ ओकश्च पश्चिमदिग्भागे-"आफ्रिका"खण्ड इति प्रसिद्धे भूभागे। ६. प्रत्यन्तरीपे-द्वीपे। ७. हरितसस्यादिसमृद्धे इत्यनेन "आस्ट्रेलिया"खण्ड इति द्योत्यते।

* अमरौके - अमेरिका (America), अपरौके आफ्रिका (Africa) इत्यर्थे संज्ञावाचकत्वात् ओक इति अकारान्तः प्रयोगो न दुष्टः। अथवा लिङ्गतत्वविचारे ओकः- इति अदन्तः पुल्लिङ्गेऽपि वर्तते यथाः-

१. ओकं-क्री-"उचेरिगुपधलक्षणे के गुणः, कुत्वाच्च।" "ओक उचःके" (पाणिनि सूत्रम् ७-३-६४) इति निपात्यते। (शब्दौघकल्पद्रुमः) २. ओकः-गृहम्-आश्रयः (इत्यमरटीकायां भरतादयः) ३. 'ओक उचःके' इति निपातनाददन्तोऽपि-(अमरसुधा) ४. ओकम्-आश्रयमात्रे मन्दिरे च नपुंसकमिति मेदिनी। तथा ओकः सद्माश्रयश्चौकाः पयः क्षीरं पयोऽम्बु च। ५. ओकः अदन्तोऽव्ययम्-"ओक उचःक" इति निपातनात् आश्रयः आश्रयमात्रम्। (गुरुबालप्रबोधिका) ६. ओकस्त्वाश्रयमात्रे स्यादिति हैमः। आश्रयस्थानमित्यर्थे "ओकः"-इति शब्दः अकारान्तोऽपि वर्तते। अथवा संज्ञाभिधायकत्वान्न दोषः।

नृलोक[1]यात्राञ्चितचित्ररूपे दूरान्तिक[2]स्थप्रतिभूमिभागे ।
सान्निध्य भूयोऽपि सुविस्मिता[3]ऽभूत् विलोक्य दुःखं कलह[4]प्रधानम् ॥
हा श्वेत[5]वर्णा मनुजा धरेशा[6] वर्णेतरान्[7] सर्वजनान् विजित्य ।
विशेष[8]बुध्या विभवा[9]नवाप्य स्वायत्त[10]भूरक्षणदक्षकार्याः ॥३५॥
पुण्ये कुले दिव्यसुरूपजाता[11] गाम्भीर्यभूषा[12] व्यवहारयोग्याः[13] ।
शूरा[14]स्सुधीरा[15] नय[16]कोविदास्ते सर्वत्र सर्वे न गुणा[17] मिलन्ति ॥३६॥

---

१. नृलोकाः-नरलोकाः- भूलोकाः । अथवा नरजनाः-तेषु-तैर्वा कृताभिर्यात्राभिस्सञ्चारविशेषैः अञ्चितानि-सूचितानि चित्राणि आश्चर्य-कराणि रूपाणि यस्य तस्मिन्निति तात्पर्यम् । २. दूरप्रदेशेषु समीप-प्रदेशेषु विद्यमाने अनेकभूप्रदेशे । ३. साश्चर्यहृदया । ४. द्वेषस्पर्धा-रूपकलहैस्समुद्भूतमिति यावत् । ५. येषां शरीरत्वग्वर्णःश्वेतः ते श्वेत-वर्णाः । "ब्रिटिष्" इति विदिताः । ६. पृथिव्या ईशा इति मन्दमति-गोचराः ७. हरिद्रापाटलादिवर्णोपेतान् इतरान् जनान् । ८. बुद्धि-विशेषेणेति यावत् । तन्त्रयुक्त्यादिभिरिति फलितार्थः । ९. धनकनक-देशकोशादिसम्पदः । १०. स्वायत्ताः- स्वाधीनं प्रापिताः या भूमयः तासां रक्षणाय दक्षाणि समर्थानि कार्याणि येषां ते । ११. मनोहर-रूपोपेताः । १२. गाम्भीर्यं सौशील्यं भूषा-भूषणं येषां ते । १३. लोक-व्यवहाराय सम्मताः । १४. शूराः-पराक्रमशालिनः । १५. आपत्स्वपि धैर्ययुक्ताः । १६. नये-राजनीतौ-कोविदाः पण्डिताः-राजनीतिज्ञा इति यावत् । १७. सर्वे सुगुणाः एकत्र वा सर्वत्र वा सामान्येन न मिलन्ति न वर्तन्त इत्यभिप्रायः ।

आकारसंसूचितपौरुषेड्याः[1] पराक्रमोपेतसुमेधसस्ते[2] ।
अमानुषस्वीयकृतार्थकृत्यास्[3]स्तुत्याशयाश्[4]श्रेष्ठसुलक्ष्य[5]दीप्ताः॥३७॥
हृच्छूल[6]भूतं लघुवर्त्म[7] तीर्त्वा सन्देहबन्धान्[8] सुचिरं विलङ्घ्य[9] ।
उदारबुध्[10]ध्यैव निरंकुशास्[11]ते राजन्ति लोके धृतधीरभावाः[12] ॥३८॥
तथापि कीर्तिक्षयहेतु[13]भूतो विषादमूलो[14] वसति व्रणो[15]ऽन्तः ।
स्वोद्देश[16]निर्वाहगतिक्रमेभ्यो दुराग्रहो[17] दुःखकरा दुराशा[18] ॥३९॥

---

१. तेषाम् आकारविशेषाणां दर्शनमात्रादेव एते पराक्रमशालिन इत्यनुमीयमानाः । २. तेषां यथा पराक्रमः तथा समीचीना मेधापि वर्तत इत्यभिप्रायः । ३. अमानुषाणि इतरजनानामसाध्यानीति यावत् । स्वीयानि - स्वकीयानि कृतानि-निर्वर्तितानि अर्थकृत्यानि अर्थार्जनसाधककार्याणि येषां ते-अर्थार्जने अतिकुशला इति यावत् । ४. श्लाघ्योद्देशकाः । ५. श्रेष्ठानि-उत्तमानि यानि सुलक्ष्याणि - समीचीनानि साधनसाध्यानि तैः दीप्ताः प्रकाशिताः प्रसिद्धा इति यावत् । ६. मनःक्षोभकरमिति यावत् । ७. लघुवर्त्म - अल्पमार्गम् - अयोग्यमार्गसरणिमिति यावत् । ८. कार्ये संशयान् । ९. निस्तीर्य अकृत्वेति तात्पर्यम् । १०. धीरभावेनैव । ११. निरन्तराया इति यावत् । १२. धैर्यशालिन इत्यर्थः । १३. यशोह्रासकारणीभूत इति तात्पर्यम् । १४. दुःखकारणम् । १५. हृदयशूलमित्यर्थः । १६. स्वकार्यसाधनमार्गेषु इति सप्तम्यर्थे चतुर्थीप्रयोगः । १७. निर्दयतेत्यर्थः । १८. अप्रशस्ता लालसा ।

भाग्येन किं भौतिकतत्व[1]बोधप्रचारसंपादितकीर्तिभाजा ।
ज्ञानेन किं शब्द[2]विजृम्भणात्तप्राज्ञप्रतिष्ठापरबोधनेन ॥४०॥
अहं[3] ममे[4]ति प्रविभेदभावो[5] न चेन्महत्तत्कुल[6]भागधेयम् ।
आत्मावबोधो[7] यदि यस्य न स्यात्तस्यास्ति काऽऽशा[8] भगवत्प्रसादे[9]॥
सदेन्द्रिया[10]र्थेषु विमोहिता[11]स्ते नित्यात्म[12]बुद्धिं न कदापि कुर्युः ।

---

१. यद्यप्येते विविधयन्त्रतन्त्ररचनासाधकविद्युच्छक्तिमुखसाधनोपष्टम्भकार्ये उपदेशाः ये मार्गाश्च तैः आर्जितमहाभाग्यशालिनः। तेन किं वा फलम् ? । २. केवलशब्दाडम्बरेण वयं विद्वांस इति स्थापयितुं यत्साधकं तेन ज्ञानेन वा किं फलम् ? न किमपि प्रयोजनमिति भावः । यदवश्यं सम्पादनीयं तन्नास्तीति तात्पर्यम्-तदेव विशदयति । ३. अहङ्कारः- देहाभिमानः । ४. ममकारः- इदं मदीयं अदः मदीयमिति भ्रान्तिः । ५. भेदबुद्धिः । "अयं निजः परो वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ।" इत्यादिनीतिरेवात्र विनिगमिका । ६. तद्वंशस्य श्रेष्ठता । ७. आत्मज्ञानम् । ८. आशंसा । ९. ईश्वरानुग्रहो भवतीति । १०. श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि इन्द्रियाणि । शब्दस्पर्शरूपरसगन्धाः तेषामर्थाः विषयाः- तेष्वेव । ११. सर्वदा मोहेन आसक्ताः ये ते । १२. नित्यात्मनि परमात्मनि बुद्धिं मतिम्, अथवा आत्मा नित्यः सुखी देहः अनित्यः निखिलरोगास्पदः अतः दुःखभाक् इत्यादिविवेचनं वा ये न कुर्वन्ति ते ।

क ईदृशा जन्ममृतिस्वभावं[1] संसारदुःखं[2] विषहं[3] तरेयुः ॥४२॥
धीशक्ति[4]पाण्डित्यवतां हि तेषां न प्रेरणा चेत्परतत्त्वलक्ष्ये[5] ।
हीना[6] जनास्तद्गुणजातभाग्यैः कथं विजानीयुरथात्मतेजः[7]॥४३॥
एतादृशाशुद्ध[8]मनोगुणेषु स्वाकाङ्क्षितं[9] किंचिदवीक्षमाणा[10] ।
दृशोश्चकाराद्भुतपारणां[11] साप्राग्भारताख्ये[12] भुवने पुराणे[13] ॥४४॥
महानुभावं[14] पितरं प्रणम्य हिमालयं भ्रूसविधेषु[15] तस्य ।
विलोक्य दुर्दर्शवलीः[16] सखेदं विचिन्तयामास विमूढचेताः[17] ॥४५॥
संसारकूपे पततां नराणां सशोकमोहा[18] विपदो विलोक्य ।

---

१. "जायते म्रियते इति तस्य तृतीयः पंथाः" इति श्रुत्या सर्वे सदा जननमरणभाजो भवन्ति । तेषां नित्यसुखस्य आशालेशोऽपि न भवतीत्यभिसन्धिः । २. इदमेव संसारे जननमरणात्मकं दुःखम् । ३. एतद्दुःखं सोढुमशक्यम् । ४. बुद्धिशक्तिजुषाम् । ५. लक्ष्यभूते परतत्वे-नित्यानित्यविवेकेन निश्चितार्थे । ६. बुद्धिरहिता इति यावत् । ७. तेजस्स्वरूपमात्मानमित्यर्थः । ८. एवंविधाऽप्रशस्तगुणोपेतेषु जनेषु । ९. स्वाभिमतम् । १०. अदृष्ट्वेति यावत् । ११. अतिशयतोषणम् । १२. प्राचीनभारतदेशे । १३. चिरकालप्रसिद्धे । १४. महात्मानम्-सकलदेवतात्मकत्वात् हिमालयस्य महत्त्वम् । १५. निटिलप्रान्तेषु । १६. वक्राकाराः ये रेखाः ता दुर्दर्शाः- दुःखप्रदा इति यावत् । १७. विमूढं तमःपरीभूता चेतः- बुद्धिः यस्यास्सा । १८. शोकाश्च मोहाश्च तैस्सह वर्तन्त इति सशोकमोहाः-(केचिच्छोकव्याकुलाः अन्ये मोहाकुलिताः-एतादृश्यो विपदः-ताः वीक्ष्येति तात्पर्यम् ।)

वलीकृतस्यास्य बभूव चिन्ता तमोमयी[1] साऽश्रुभरेति मेने॥४६॥
हा नाथ मे तात तमः[2] किमेतत् हृत्क्षोभमोहो[3] बत ते कुतोऽभूत्।
किं भारतोर्वीस्थिति[4]र्जातचिन्ता यद्बाष्प[5]वर्षाणि हि मुञ्चसि त्वम्॥
ध्रुवं घृणा[6] तत्स्थितिवीक्षणेन कठोरचेतस्य[7]पि जायते हा।
महर्षिभूमि[8]र्यदियं पवित्रा[9] विद्याकलाढ्या[10] जगति प्रसिद्धा॥४८॥
स्पर्धा[11] वसिष्ठेन समं पुराऽभूद्यत्र प्रसिद्धा मुनिकौशिकस्य[12]।
तपांसि यस्यां जगदद्भुतानि[13] चक्रुः[14] पवित्राणि[15] गुहावनानि॥

---

१. तमःप्रधाना विवेकशून्येत्यर्थः। २. मोहः। ३. मनसः व्याकुलकारी। ४. भारतभूम्यां स्थिताः ये जनाः तेषां दुरवस्थां वीक्ष्य तव एवं चिन्ता जाता किमिति सकरुणः प्रश्नः। ५. अश्रूणि। ६. करुणा। ७. कठिनहृदयेऽपि। ८. महर्षिभिरुषितदेशः। ९. परिशुद्धा पुण्यभूमिरिति यावत्। १०. चतुर्दशविधविद्याभिः- चतुष्षष्टिकलाभिश्च परिपूर्णा। ११. अहमपि तपश्शक्त्या ब्रह्मर्षित्वं प्राप्य वसिष्ठ इव सर्वशक्तिमान् भवामीत्यभिनिवेशः। १२. विश्वामित्रस्य। १३. अत्यन्तविस्मयकराणीति यावत्। १४. तेनुः। यस्यां जगदद्भुतानि (ऋषीणां) तपांसि गुहावनानि पवित्राणि चक्रुरित्यन्वयः। १५. परिशुद्धानि - पुण्यकराणीति यावत्।

श्रीरामवीर्याप्तजयाञ्चितैषा[1] श्रीकृष्णलीलामहिमात्तवेषा[2]।
कर्षद्धरिश्चन्द्रकथाविशेषा[3] धर्मिष्ठकार्याद्दतसत्यभूषा[4] ॥५०॥
सद्ब्राह्मणा यत्र ललङ्घिरे[5] न स्वधर्मरक्तास्स्मृतिचोदितोक्तीः[6][7]।
विगर्ह्य सर्वं धनमानगर्वं[8] जनप्रशंसापरसेवका[9] नो ॥५१॥
सदाग्निहोत्रैर्विहिताग्निपूजा[10]स्सन्ध्यापरा[11]स्सूर्य[12]कृते सकाले[13]।

---

१. श्रीरामस्य यः पराक्रमः तेन लब्धानां विजयपरम्पराणां सूचिकेयं भारतभूमिः। विजयास्तु-ताटकावधः- सुबाहुमारीचनिग्रहः- विराधकबन्धगर्वभङ्गः- खरदूषणत्रिशिरस्संहारः- वालिविमोक्षः- रावण-कुम्भकर्णादिराक्षसनाशः एतद्रूपाः। २. श्रीकृष्णस्य विलासप्रभावो-पेता-कथम्? एकदा गोपिकाविलासः- अन्यदा पूतनाप्राणविलुण्ठनम्-काळीयमर्दनम्-ततः मुष्टिकचाणूराभ्यां सह मल्लयुद्धम्। ततः कंसध्वंसः-एकदा रुक्मिणीमनोरथपूरणम्-अन्यदा पारिजातापहरणम्, कौरवशिक्षा पाण्डवरक्षा-पाण्डवमध्यमाय तत्वोपदेश इत्यादि लीलामहिमसूचकानि लिङ्गानि गोकुलमधुराबृन्दावनकुरुक्षेत्रादिषु दृश्यन्ते इत्यभिप्रायः। ३. हरिश्चन्द्रवृत्तान्तचिह्नानि तु काश्यादिप्रदेशेषु स्पष्टमवगम्यन्ते। ४. धर्मिष्ठाः-दिलीपरघुपृथुययातिप्रभृतयः- तेषां कार्याणि विविधान्य-त्यन्तश्लाघ्यानि तैर्विदिता। ५. लंघ् धातोः लिटि प्रथम पुरुष बहुवचनरूपम्। नातिययुरित्यभिप्रायः। ६. स्वकीयधर्मनिरताः। ७. शास्त्रविहितनियमान्। ८. धनमदम्-जात्यादिश्रेष्ठत्वबुद्धि दुरभि-मानं-इत्यादिदुर्गुणान्। ९. अत्मस्तुति - सेवकवृत्यादिपराः नाभवन्। १०. इष्टियज्ञयागादिषु व्यापृताः। ११. त्रिकालसन्ध्याचरणनिष्ठाः। १२. सूर्यमुद्दिश्य। १३. प्रातः- मध्याह्ने-सायम् अर्थात् सूर्ये, अर्धो-दिते-खमध्यगते अर्धास्तमिते काल इति भावः।

परात्मजीवात्मसमर्पणार्था[1]स्स्वतन्त्रचेष्टा[2] निजतुष्टिभाजः ॥५२॥
सा ब्राह्मणस्यात्र दशा[3]ऽद्य भिन्ना[4] दम्भाभिमानी[5] धनलुब्धचेताः[6]।
अन्तस्थतेजोभिभवा[7]त्स आस्ते भग्नो[8] रवेर्दुर्ग इवास्तकाले ॥५३॥
सनातनस्यार्यकुलस्य मूलं सा ब्राह्मणं वीक्ष्य कृपार्द्रचित्ता[9]।
शोच्यां दशां तामनुभावयन्ती[10] कारुण्यवाण्ये[11]त्थममुं[12] बभाषे॥५४॥
भो ब्राह्मण त्वं कलिवर्त्मचारिन्[13] वैराग्यभूमि[14]र्निजतत्त्ववेदी[15]।
एवं[16] पुराऽभूर्विदितोऽत्र तेऽद्य क्व ते गुणा जाग्रति[17] भान्ति[18] सर्वे॥

---

१. परात्मनि जीवात्मनः समर्पणमेव अर्थः प्रयोजनं येषां ते । आत्मोपासका इति यावत् । २. अप्रतिबन्धकव्यापाराः । ३. अवस्था - स्थितिः । ४. विपरीता । ५. फटाटोपयुक्तः । ६. धनपिशाचाविष्टः- "अर्थोऽस्तु नः केवलम्" - इति केवलधनार्जनबुद्धिमान् । ७. आत्मशक्तिदौर्बल्येन । ८. नाशितः । ९. दयार्द्रचेताः । १०. चिन्तयन्ती । ११. करुणापूर्णभणितेन । १२. ब्राह्मणसामान्यमुद्दिश्य । १३. निन्द्यमार्गानुयायिन् । भो ब्राह्मणेति सम्बोधनम् । १४. वैराग्यस्य परा काष्ठा । १५. आत्मस्वरूपवित् । १६. पुरा त्वम् एवं विदितः आसीः। १७. जागृ धातोः लटि प्रथमपुरुषबहुवचनरूपम् । सन्तीत्यर्थे । जागर्ति - जागृतः- जाग्रति जागर्षि - जागृथः- जागृथ । जागर्मि - जागृवः- जागृमः इति तत्र पुरुषत्रयवचनत्रयरूपाणि । १८. भान्ति-प्रकाशन्ते । न कुत्रापि सन्ति-सन्ति चेत्प्रकाशेरन्निति तात्पर्यम् ।

त्वं वेदशास्त्रा[1]ध्ययनं [2]पवित्रं मुक्ति[3]प्रदं विस्मरासि स्म किं भोः।
परस्परं सेवक[4]वृत्तिकार्ये [5]स्पर्धैव किं ते निजभाग[6]धेयम् ॥५६॥

वि[7]षादकृद्धा परिणाम एवं नि[8]कृन्तति क्षी[9]णबलं मनो मे।
[10]इरोपदेशे यदि मेऽनुकम्पा[11] निकृष्ट[12]भावस्त्वयि केवलं भोः॥५७

धिक्[13]तुच्छलक्ष्यं धिगधः[14]प्रयत्नं [15]स्वार्थीयचेष्टां धिगनात्मपूजाम्[16]।
अद[17]म्भसत्यव्रतजीविते हि [18]प्रतिष्ठिता [19]सर्वविभूतिशक्तिः ॥५८॥

---

१. वेदाः चत्वारः- ऋग्यजुस्सामाथर्वाख्याः । शास्त्राणि-प्राधान्येन षट् सांख्य-योग-न्याय-वैशेषिक -मीमांसा-वेदान्ताभिधाः । शिक्षादिषडङ्गानां वेदशब्दे - स्मृत्यागमानां शास्त्रशब्देऽन्तर्भावः । एतेषु सर्वेषु वा केवलवेदेषु वा स्वशाखाभूतवेदे वा अध्ययनं तदर्थाव-बोधश्च । २. पापक्षयकरम्-सर्वार्थसाधकमिति हेतोः। ३. मोक्षदायकम्-संसारदुःखनिवर्तकमिति यावत् । ४. जीविकोपसङ्ग्रहार्थं जाति-गुणाद्यविमर्शपूर्वकं यं कञ्चिद्वा - यत्र कुत्र वा सेवित्वा जीवितकाल-यापनव्यापारे । ५. अहमहमिकया कार्यव्यापृतता । ६. तव अदृष्टं किम्-धर्माधर्मावदृष्टं स्यादिति नीतिः। ७. व्यसनकारी । ८. व्यथयति। ९. दुर्बलम् । १०. तत्रस्थजनानां विषये इत्यर्थः। ११. घृणा । १२. तुच्छबुद्धिः । १३. निकृष्टकार्ये अभिनिवेशः-परमनिन्द्य इति भावः । १४. निन्दितकार्योद्यमोऽपि तथैव गर्हणीय इत्यभिसन्धिः। १५. स्वकार्यपरतापि न प्रशंसनीया । १६. अनात्म-भूतशरीरेन्द्रियतर्पणे आसक्तिश्च विगर्हणीयेत्यभिप्रायः। १७. सन्मार्ग-साधुजीविते । १८. प्रकर्षेण स्थिता । १९. सर्वसम्पत्समृद्धिः ।

त्वं स्वप्रतिष्ठां[1] त्यज भो दुराशां[2] नीचाध्वसञ्चारधियं[3] विगर्ह्याम्[4] ।
सौहार्दमेव[5] प्रतनु[6] प्रकामं[7] प्रीतौ[8] विजानीहि बलं[9] स्वकीयम्[10]॥५९॥
स्वाधीनतार्थः[11] प्रणयोऽखिलेषु[12] श्रद्धाबलं[13] हि प्रणयस्य मूलम् ।
श्रद्धाऽसमर्था[14] यदि कार्यसिद्ध्यै किं जीवितेनाथ[15] किमीश्वरेण[16]॥
तद्धर्महीनं[17] लवणं भवेच्चेत् कुर्यात्किमन्यल्लवणस्वभावम्[18] ।
स्वान्तःसुखे[19] रागघनावृते[20] ते भवाब्धिनौकातरणं[21] कथं स्यात् ॥

---

१. स्वात्माभिमानम् । २. अत्यन्ततर्षम् । ३. अनभिमत-कार्यपरताम् । ४. विनिन्द्याम् । ५. प्रीतिम् । ६. सर्वदा कुरु । ७. विशेषेण । ८. प्रियकरव्यापारे । ९. शक्तिः। १०. प्रियकारिणि जने स्वीयाः सर्वे स्निह्यन्ति । तदेव तस्य बलमित्यभिप्रायः । ११. स्वातन्त्र्यमिति यदुच्यते तत् । १२. प्रीतिभावः । १३. तादृशप्रीतिभावाधिगमाय वेदशास्त्राणि गुरुजनोपदेशः परम्परागता आचाराः इत्यादिकारणं भवतीत्याशयः । १४. यस्मिन् श्रद्धा नास्ति । १५. तस्मिन् जीवितमेव शून्यमिति मन्तव्यम् । १६. तस्मिन् ईश्वरानुग्रहोऽपि न भवतीत्याकूतम् ।१७. लवणे लवणत्वं निर्गतं चेत् । १८. तत् केन लवणमिति कथ्यते । केन वा प्रयत्नेन लवणत्वं सम्पाद्यते । अनेन सर्वं स्वभावं न जहाति । स्वस्मिन् स्वभावशून्यतानुपपन्ना इत्युक्तम् । "स्वधर्मे निधनं श्रेयः" इत्यादिस्मृत्युक्त्यनुसंधानेन सर्वः- स्वस्वधर्मं परिपालयेत् । अन्यधर्ममोहेन नानुसरेदिति तत्वोपदेशः सम्यगुपदिष्टः। १९. अन्तश्शान्तिदायकचित्ते । २०. कामान्धकारपरीते । २१. संसारविच्छेदः ।

व्यासं[1] शुकं[2] संस्मर याज्ञवल्क्यं[3] पुरातनर्षीन्[4] नुतपुण्यकीर्तीन्[5] ।
तद्ब्रह्मतेजः[6] किमहो विलुप्तं[7] तद्दिष्टमार्गाः[8] किमरं विनष्टाः[9] ॥६२॥

माऽनन्यतन्त्रप्रकृतिं[10] सुखेन विक्रीय मोहात् क्षणभङ्गुरेण[11] ।
मा तोलयैतद्बलमानवित्तैर्[12] मा ऽऽनन्दरूपं[13] त्यज नित्यभोगम्[14] ॥६३॥

स्वप्नेऽपि मा चिन्तय तुच्छभावं[15] जात्यैव[16] पूज्यो[17]ऽत्र जनस्सदेति ।
उन्मत्तबुद्धिर्[18]यदि सा न रुद्धा तदा मुदा यान्त्यखिलापदस्[19]ते ॥

जना मदान्धा[20] यदि भर्त्सयन्ति[21] त्वां निर्दयवाग्भिर्[22]निशितासिघातैः[23] ।
तितिक्षया[24] त्वं न कुरु प्रतीपं[25] सर्वेऽनुजास्ते भगवत्प्रसूताः[26] ॥६५॥

---

१. अष्टादशपुराणानां, भारतस्य, ब्रह्मसूत्रग्रन्थस्य, धर्मशास्त्रस्य, अन्येषां शिक्षादिग्रन्थानां च कर्ता पराशरात्मजः सत्यवतीसूनुः-व्यासः तम् । २. तपोनिधिम्-भागवतोपदेष्टारं व्याससुतं शुकम् । ३. स्मृतिकारः कात्यायन्याः गार्ग्याश्च भर्ता मिथिलाधिपस्य जनकस्य राज्ञः तत्वोपदेष्टा याज्ञवल्क्यः तम् । ४. प्राचीनान्मुनिवर्यान् । ५. नुता-पुण्येन सम्पादिता कीर्तिः येषां तान् - प्रशस्तपुण्यकर्मण इति यावत् । ६. ब्रह्मवर्चसम् । ७. नष्टम् । ८. तैः प्रदिष्टाः आचाराः । ९. लुप्ताः । १०. स्वतन्त्रस्वभावमिति यावत् । ११. अल्पकालीनेन । १२. पशुबलेन । दुरभिमानेन अनर्थकार्यार्थेन । १३. नित्यसुखरूपमिति यावत् । १४. अविच्छिन्नानुभवरूपम् । १५. नीचानुसंधानम् । १६. केवलवर्णप्रसूत्यैव । १७. श्लाघ्यः । १८. अविवेकधीः । १९. सर्वानर्थाः । २०. अहङ्कारयुक्ताः । २१. निन्दन्ति । २२. अशुभभाषणैः । २३. मर्मोच्छेदकैः । २४. सहनेन । २५. प्रतिक्रियां । २६. जगत्पितुः पुत्राः ।

स्वार्थानपेक्षी[1] सुमना[2]स्तितिक्षु[3]स्त्वं शिक्षयान्यान् सुगुणान् विशालान्[4]
भूतानुकम्पा[5] प्रणयो[6]ऽखिलेषु ब्रह्मज्ञभावस्य[7] हि लक्षणं भोः॥६५॥
प्रिय[8]स्सहाय[9]स्सुखमार्गदर्शी[10] तवानुजानां[11] भव मा[12]ऽधिपोऽभूः ।
सुता हि सर्वे प्रियवत्सका[13] मे तज्जीविताध्वा[14] प्रसरत्वबाधम्[15]॥६७॥
स्वदेशसेवां[16] कुरु देहयज्ञात्[17] सतीसुतार्थव्यसनानि[18] हित्वा ।
हेयार्थलाभाय[19] न ते मतिस्स्यात्ता[20]टस्थ्यदैन्योद्धतशुष्कबोधात् ॥
दुस्तीर्णकष्ट[21]व्यसनैर्जनानां संतप्त[22]हृद्ब्राह्मणमेवमुक्त्वा[23] ।
सा देवतोमा प्रतियातुकामा[24] कैलासलोकं विमना[25] जगाम॥६९॥

इति प्रथमस्सर्गः

---

१. स्वार्थविमुखः। २. निर्मलान्तःकरणः । ३. सहनशीलः । ४. उदारान्। ५. प्राणिनां हितचिन्तनं प्राणिदया । ६. प्रीतिः-स्नेहभावः । ७. ब्रह्मवित्स्वभावस्य । ८. स्नेहयुक्तः । ९. अन्नवस्त्रादिना उपकारकारी । १०. सन्मार्गबोधकः।११. भ्रातृभूतानां सर्वजनानाम्। १२. स्वामी-आज्ञाकारीति यावत्। १३. प्रियसुताः। १४. तेषां जीवितगतिः । १५. निरन्तरायम्। १६. स्वदेशकृते यद्यदपेक्ष्यते-यद्यत्तव साध्यं तत्तत्कार्यस्य करणम्। १७. स्वशरीरत्यागेनापि । १८. पत्नीपुत्राद्यर्थं लोकव्यवहाराणि परित्यज्येत्यभिप्रायः। १९.नीचमार्गेण सुखापादकपदार्थसम्पादनाय । २०. उदासीनवृत्या-वृथा दीनभावप्रदर्शनेन-सदर्पेण अर्थशून्येन भाषणेन च। २१. दुरन्तदुःखैः । २२. अनुकम्पितचित्ता। २३. पूर्वोक्तप्रकारेणोपदिश्य। २४. निवर्तनापेक्षा सती । २५. दुःखिता। स्वेष्टसिद्ध्यलाभेन दीनदीनेति यावत्। इति श्रीवेङ्कटरमणार्यविरचिते-'उमादर्शा'ख्यतत्वार्थकाव्ये - प्रथमसर्गस्य स्वेनैव रचिता गम्भीरपदार्थबोधिन्याख्या व्याख्या समाप्ता ।

# द्वितीयस्सर्गः

---

ततः प्रयांती[1] दिवि दिव्यदेशान्[2] ददर्श मार्गे मुहुरादरात्सा ।
यत्रामरत्वं[3] सुकृतैरुपेत्य[4] चित्राद्भुतौकेषु[5] वसन्ति देवाः ॥१॥
मन्दं[6] मरुद्वाति न यत्र चण्डं[7] गान्धर्वगीतं श्रुतिरञ्जकं[8] स्यात् ।
ये कामरूपा[9] विहरन्ति कामं विमृत्यवो[10] वीतभया[11] विशोकाः[12]॥२॥
उज्जीविताशा[13] पुनरेव तस्यास्सन्तृप्तकर्णाक्षिसुखं[14] भजन्त्याः ।

---

१. गच्छन्ती । २. स्वर्गलोके विद्यमानान् - नन्दनवनादि-प्रदेशान् । ३. मृतिरहितदशाम् । ४. कृतपुण्यविशेषैः- यागादिजन्यैः अपूर्वविशेषैर्वा । ५. नानाविधानि आश्चर्यकराणि वैजयन्त्यादिप्रासाद-हर्म्यमुख्यानि - तेषु । ऐरावतोच्चैश्रवःकामधेन्वाश्रयशालासु वा । ओकेषु इति पुल्लिङ्गे अकारान्ते प्रयोगविषये उपपत्तिः पूर्वं प्रदर्शिता । ६. आप्यायमानं यथा । ७. उद्वेजकम् । ८. श्रुतिहितमिति यावत् । ९. यथाकामम् - यथाभिलषितं कुक्कुटमार्जारादिनानाविधानि रूपाणि धर्तुं शक्ताः । १०. मृत्युभयापेताः। ११. भूलोके संसारिणां या या आपदस्सम्भवन्ति - तादृशापद्भ्यः परित्यक्ताः । १२. अमृतरूपत्वात्पत्नीपुत्रादिवियोगजन्यशोकशून्याः । १३. पार्वत्याः नष्टप्राया-स्वाकांक्षितप्रत्याशा अमरलोकदर्शनेन पुनरुद्भूता । १४. दर्शनेन नेत्रानन्दः-श्रवणेन श्रोत्रानन्दः एतदादिरूपं सुखम् ।

निस्तीर्णदुर्गाश्रितकाननस्य साधोरिवासादितगम्यभूमेः ॥३॥
लोकाननेकान् समतीत्य हर्षादालोक्य तत्रस्थममर्त्यवर्गम् ।
ब्रह्मेन्द्रदेवर्षिमरुद्गणांश्च कलत्रभाजः पथि सा जगाम ॥४॥
सुखं यदेषां सुतरामनित्यं व्यर्थं समुत्सेककरं समस्तम् ।
बाह्यानि रूपाणि सरूपतां मे भजन्ति नामानि कथं हि तस्मात् ॥
अन्तर्बहिर्यत्र सदैकरूपो देहत्रयोपाधिभिदात्मभावः ।
असंशयं बिम्बनिजस्वरूपं पश्यामि तत्रेत्यवदत्तदा सा ॥६॥
कैलासशृङ्गार्कमयूखभासो नुदन्ति यस्यां रजनीतमिस्रम् ।

---

१. दुर्गैः पर्वतादिदुर्गमप्रदेशैः आश्रितानि सम्बद्धानि यानि काननानि अरण्यानि तानि निस्तीर्णानि-सन्ततगत्या विमुक्तानि-येन तस्येति तात्पर्यम् । २. आसादिताअधिगतःगम्यभूमिः- प्राप्यप्रदेशः येन सः तस्य । एतद्द्वयमपि "साधोः" इति पदस्य विशेषणम् । अनेन यथा दुर्गप्रदेशसञ्चारवशाद्दुःखितस्य सत्पुरुषस्य उद्दिष्टस्थलप्राप्त्या यादृशसुखं जायते-तथा भूलोकादिसञ्चारेण सर्वत्र दुःखमेव पश्यन्त्याः पार्वत्याः स्वर्गलोके चित्राद्भुतविषयदर्शनेन तादृशसुखं जातमित्यभिप्रायः। ३. सुरजनसमूहम् । ४. सभार्याः इति यावत् । ५. गर्वापादकम् । ६. समानरूपं सरूपम्-तस्य भावः- सरूपता ताम् - स्वरूपसाम्यमिति यावत् । ७. अविकारीत्यभिप्रायः । ८. स्थूलसूक्ष्मकारणाख्यदेहा एव उपाधयः तान् भिनत्तीति निरुपाधिक इत्यर्थः । ९. स्वरूपमिति यावत् । १०. बिम्बभूतम्-मूलभूतं निजस्वरूपम्-चिद्रूपमिति तात्पर्यम् । ११. कैलासशिखरेभ्यः प्रसृताः रविकिरणप्रभाः । १२. अपहरन्ति । १३. नैशं तमः ।

दिशं हितां स्वीयगृहाश्रयां[1] सा प्रत्यागमत् खिन्नमना[2] निराशा[3] ॥
द्वारं ततो राजत[4]मागतायामस्यां हि नन्दी स्तुतधर्ममूर्तिः[5] ।
प्रणम्य तां मोदविशाल[6]नेत्रो ह्यपावृणो[7]दस्य कवाटमारात् ॥८॥
निश्शब्दमन्तः[8] प्रविवेश सोमा हा नेक्षते स्म प्रियमन्तिकस्थम् ।
परा[9]भवाक्रान्तविशिष्टभावा कपोलसंपादितबाष्पधारा[10] ॥९॥
सुधाधुनीराजितभूमि[11]भागं लतागृहं सा तदनुप्रविश्य ।
मन्दा[12]निलाकम्पितपुष्पशय्यां रम्यामधिश्रित्य[13] रराज तन्वी ॥१०
हा हन्त दुर्दैवहता[14]ऽहमस्मि व्यर्थं[15] मया प्रार्थितमेव मन्ये ।
इत्थं सरिद्वेगरव[16]प्रदीयश्श्राव्यस्वरेण प्रललाप साऽऽर्ता[17] ॥११॥
याताऽस्मि पूर्वापरदक्षिणोदग्भागेषु सर्वासु विदिक्षु चाहम् ।

---

१. स्वगृहाधिगताम् । २. विषण्णमानसा । ३. त्यक्तमनोरथा ।४. रजतेन निर्मितम् । ५. स्तुत्यधर्मस्वरूपः। ६. स्वस्वामिन्याः दर्शनेन यो हर्षो जातः तेन विकसितनयनः । ७. अनावृतमकरोत् । ८. मौनेनैव-परिभूतमनसे अन्यैःसह सम्भाषणं न रोचते । ९. पराजयेनाच्छादितेतरमनोव्यापारा-परिभवभावेनैव पूर्णहृदयेति तात्पर्यम् । १०. कपोलप्रदेशयोः प्रसृताः अश्रुसम्पाताः यस्यास्सा।११. अमृतसदृशजलयुतसरित्प्रवाहाञ्चितभूप्रदेशम् । १२. मन्दमारुतेनापातित पुष्पाण्येव शय्या तस्यामिति यावत् । १३. शरीरं पातयित्वा । १४. निर्भाग्यशालिनीति यावत् । १५. असाधु-निष्प्रयोजनमिति तात्पर्यम् । १६. सरितः-तत्र प्रवहत्तरङ्गिण्याः यो वेगः रभसः तेन जनितः यः रवः-स्वनः तस्मादपि मृदुतरः श्राव्यस्वरः श्रुतिरञ्जकध्वनिः-तेनेत्यर्थः । १७. दुःखपीडिता ।

पुरीः प्रसिद्धा भुवनान्यपश्यं यादस्[1]तरङ्गैर्भरितान् समुद्रान् ॥१२
ऊर्ध्वेषु लोकेषु तथाऽधरेषु प्रत्याशया[2]ऽहं बहुधा निरैक्षे[3] ।
जाता विलासे मयि चानुकम्पा मिथ्या[4]भिमाने व्यसनं[5] सुराणाम् ॥
विचित्र[6]सृष्टौ निजतत्त्व[7]दृष्टिः किं वा न जायेत विशोधनैर्[8]मे ।
विनाऽऽत्मनो ज्ञानमवैमि नूनं वृथा सुखाशां[9] भुवि जीविताशां[10] ॥
स्वामिन् महादेव कृपाम्बुराशे[11] किं क्रीडसि त्वं व्यथयो[12] ममैवम् ।
किं मोऽच्युता[13]हं निजधर्मकार्या[14]दादर्शदानेन मयि प्रसीद ॥१५॥
अज्ञान[15]मूढे हृदये ह्यशुद्धे[16] व्यर्थास्समस्ताभ्युदयार्थ[17]लाभाः ।
न तत्र[18] शंङ्के सुगुणा[19] वसन्ति स्वरूपसाम्यं[20] क लभेय साऽहम् ॥

---

१. जलजन्तुभि: ऊर्मिभिश्च । २. स्पृहया-सस्पृहा सतीति भाव: । ३. सावधानमवलोकनं कृतवती । ४. दुरभिमाने नश्वर-सुखानुभवजातचित्तसमुन्नतावित्यभिप्राय: । ५. व्यथा । ६. अद्भुतेषु सृष्टपदार्थजातेषु । ७. तत्त्वज्ञानम् । ८. सम्यग्विचारेण । ९. सुख-प्राप्तीच्छा । १०. जीविते प्रत्याशा - "जीवन्भद्राणि पश्यति" इति महापतिव्रताया: सीतादेव्या: वचनात् मया चिरं जीवितव्यमित्यपेक्षापि-वृथा व्यर्थेति दीनालाप: । ११. दयासागर । १२. दु:खेन । १३. अतिक्रान्ता-भ्रष्टेति यावत् । १४. स्वधर्मात् - पतिशुश्रूषादि-कर्तव्यव्यापारादित्याशय: । १५. मोहाभिभूते । १६. मिथ्याभि-सन्धिमलिने । १७. सकलश्रेयस्सम्पादकार्था: । १८. तेष्वभ्यु-दयार्थेषु । १९. सद्गुणा:- स्तुत्यभावा इति यावत् । २०. मम आत्मसादृश्यम् ।

विशुद्धभक्त्याशय[1]गुम्फितायां तत्प्रा[2]र्थनायां दयितो दयात्मा ।
शुश्राव देवो व्यसनस्य बीजं[3] शिवश्शिवायाश्शि[4]वमिच्छुरुच्चैः ॥
गुर्वीं शुचं लब्ध्वपनेतुका[5]मः पुरस्स्थितोऽस्याः प्रण[6]यी बभाषे ।
अयि प्रिये देवि जहीहि शोकं द्रुतं मनःशान्तिमवाप्नु[7]हीति ॥
आत्मावि[8]चारादखिलेन्द्रियाणि मनश्च मुह्यन्ति सुदुर्ब[9]लानि ।
बाह्यं समस्तं च यदात्मभा[10]स्यं साध्या तदात्मप्र[11]मितिर्न तेन ॥
स्वप्ने सुषुप्तावथ जाग्रतीत्थं जागर्ति कालत्रितये तवात्मा ।
विका[12]रजातं प्रकृतिप्र[13]भूतं ह्य[14]विक्रियः पश्यति नित्यसा[15]क्षी॥२०॥
आत्मानमेनं रमणीयरू[16]पं निध्या[17]य देव्यत्र विचिन्तय त्वम् ।
स्वस्मिन्[18] महिम्नि प्रतितिष्ठतीदं ब्र[19]ह्माण्डतेजः क्व नु ते[20]न साम्यम् ॥

---

१. निर्मलप्रीतिभावगर्भितायाम् । २. पार्वत्याः आर्तोक्त्याम् । ३. मूलम् । ४. मङ्गलम् - शुभोदर्कमिति यावत् । ५. परिहरणेच्छुः। ६. स्निग्धः । ७. लभस्व । ८. आत्मतत्त्वविचाराभावात् । ९. शक्तिशून्यानीति यावत् । १०. चित्प्रकाशेनैव भास्यम् - "तस्य भासा सर्वमिदं विभाति" इति श्रुतिः । ११. आत्मज्ञानम् - यदा चित्प्रकाशेनैव सर्वं बाह्यपदार्थजातं भास्यते तदा को वा बाह्यपदार्थः-स्वभासकं चिद्रूपं प्रकाशयेत्-न कोपीत्यर्थः । १२. सत्त्वरजस्तमोगुण-परिणामभूतं सर्वम् । १३. प्रकृतिविकाररूपम् । १४. अपरिणामी । १५. कूटस्थचैतन्यरूपेण नित्यसाक्षी ।१६. आनन्दरूपमिति यावत् । १७. सम्यगालोच्य । १८. परमे व्योम्नि । १९. जगत्प्रकाशः । २०. तेन-विभुरूपेण सर्वव्यापिना-सर्वान्तर्यामिणा ।

अन्तर्मुखालोकनिरोधभूता[1] मायाऽऽत्मविज्ञान[2]विरोधिनी सा ।
यन्मोहशक्त्या[3] प्रविकर्षितं[4] हा सत्यान्मनो[5] धावति कुत्सितार्थे[6]॥
यस्या विलासाहितजालबद्धा[7]श्शोचन्ति सर्वे विपदग्निदग्धाः[8] ।
भित्त्वाऽथ तज्जाल[9]मलं समर्थास्स्वानन्द[10]माप्तुं परिपूर्णरूपम्[11] ॥
[12]यद्धस्तसंपीडितदुर्बला हा नष्टप्रभावा[13] मृतिजन्मभाजः[14] ।
नराश्च देवाश्च नयन्ति कालं श्रान्ता विमुग्धाः[15] पथिका[16] इवात्र॥
तन्निर्मलं शुद्धनिजस्वरूपं[17] बाह्यार्थसंघाः[18] किमु दर्शयेयुः ।

---

१. समाधिज्ञानविरोधिनी । २. आत्मतत्त्वप्रत्ययपरिपन्थिनी । ३. यस्याः मायायाः सम्बन्धिन्या अज्ञानशक्त्या अविद्येति यावत् । ४. आकृष्टं सत् । ५. सत्यस्वरूपस्यात्मनस्सकाशात् । ६. नश्वरपदार्थेषु । ७. क्रीडाकल्पितमोहपाशबद्धाः । ८. सकलापद्दुःखिताः । ९. मायापाशम् । १०. आनन्दस्वरूपमात्मानम् । ११. "पूर्णमदः पूर्णमिदम्"-इत्यादिना सम्पूर्णस्वरूपम् । १२. मायापाशबद्धा ये तेषां दौर्बल्यं सहजमेव । तत्कथं वा निजबलं भवेत् । अतः दुर्बलास्ते । १३. आत्माज्ञानिनाम्-अविद्योपजुष्टानां, तेजोबलं नास्त्येवेति भावः । १४. जननमरणप्रवाहजुष्टाः । १५. ज्ञानशून्याः- भ्रान्ता इति यावत् । १६. मार्गस्था इव यथा-अपरिचितमार्गः पथिकः स्वाकांक्षितं ग्रामं नगरं वा प्राप्तुमशक्तः भ्रान्तो भवति - तथा अज्ञानिनः आत्मस्वरूपं ज्ञातुमसमर्थाः भ्रान्ता भवन्तीति तात्पर्यम् - १७. मायोपाधिरहितम् आत्मस्वरूपम् । १८. जगत्पदार्थाः ।

न साधुवर्त्मानुसृतं[1] त्वयाऽतस्सिद्धिर्न जाताऽत्र तवेप्सितार्थे[2] ॥
अनेन बोधेन शिवस्य तस्या न प्रत्ययो[3]ऽभून्न तथैव तृप्तिः ।
अभीप्सितार्थे[4] विफले[5] न नार्यश्शृण्वन्ति केनापि कृतान् सुबोधान्[6]
अधित्यकायां[7] घनवृष्टिमत्यां[8] प्रक्षालिता[9] स्यात् तदुपत्यकाऽलम्[10] ।
स्त्रीभिस्स्वचित्ते तु कृते कठोरे[11] हितोपदेशा[12] विफलीभवन्ति[13] ॥
तस्या मुखे वीक्ष्य शिवो विकारं[14] विचिन्तयामास निगूढभावः[15] ।

---

१. प्रशंसनीयमार्गम् । २. इष्टार्थे । ३. विश्वासः । ४. स्वाकांक्षितप्रयोजने । ५. निष्फले-असिद्धे सतीति यावत् । ६. सदुपदेशान् । ७. अद्रेः उपरिभागे । ८. वर्षप्रादुर्भावयुक्ते सति । ९-१०. तस्मान्निसृताः जलधाराः अद्रेः मूलप्रदेशान् प्रविशन्ति खलु । ११. हठेन स्थिरीकृते इत्यर्थः । १२. वृद्धजनानां हितोक्तयः । १३. सार्थिका न भवन्ति । अद्रेरुपरिभागा इव-वृद्ध-जनाः- तत्र पतितवर्षधारा इव वृद्धजनकृतहितोपदेशाः । अद्रेरासन्न-भागा इव तरुणस्त्रीजनाः- तानासन्नभागान्प्रति उपरिभागादागता नीरधारा इव तरुणस्त्रीजनान्प्रति-वृद्धजनेभ्य आगताः उपदेशाः । एवमुपमानोपमेयधर्माः समाना भवन्त्यपि अधस्स्थलेषु नीरभागाः यथा प्रविशन्ति स्त्रीजनेषु हितोक्तयः तथा न प्रविशन्तीति प्रतीपव्यापारस्सूचितः । आग्रहग्रस्तस्त्रीजनसमाधानं दुष्करमिति फलितार्थः । प्रकृते उमादेवी महादेवोक्तहितोक्तीः न परिजग्राहेति तात्पर्यम् । १४. असन्तुष्टभावम् । मुखभावाः हृदयेङ्गितानि निरूपयन्ति खलु । १५. अप्रकटितात्मभावः ।

शान्तिस्सुखं केन भवेत्प्रियायाः पश्याम्यहं कां गुणवच्चिकित्साम्[1]
साक्षा[2]दाधिष्ठानचिदेव सोमा [3]बाह्यार्थजातं किमु भासयेत्ताम् ।
तथाऽपि साऽऽदर्शमपेक्षते[4]हा सुनिष्फलैः[5] कारण[6]कार्यवादः ॥
शिवप्रभावेण [7]समाधियोगे निपातिता सा सुखिता प्रसुप्ता ।
निजस्वरूपानुभवात्तदानीमवैत्किल द्वै[9]तकृतं न दुःखम् ॥३०॥
[10]रूक्षं स्वभावं प्रकरोति शा[11]न्तं सौ[12]म्यं सुषुप्तिर्हृदयं कठोर[13]म् ।

---

१. सफलपरिहारम् । २. समस्तपदार्थानामाश्रयभूता-जगदुपादानकारणत्वात् । ३. बाह्यपदार्थाः । ४. "हे"ति विषादाश्चर्यसूचको निपातः । ५. व्यर्थः- अप्रयोजकः- असम्बद्ध इति यावत् । ६. "कारणगुणाः कार्ये सङ्क्रामन्ति" इति न्यायेन जगत्कारणभूतायाः उमायाः चिच्छक्तिप्रभावात् कार्यभूतास्सर्वे पदार्थाः भासन्ते कथं वा ते तां भासयेयुरिति कार्यकारणवाद एव असमञ्जस इव प्रतिभातीति सकरुणोपालम्भवचनम् । ७. सुषुप्तौ यथा तथा समाधावपि इन्द्रियव्यापाराः विरता भवन्ति । परन्तु सुषुप्तौ मनोऽपि तात्कालिकलयमधिगच्छति । समाधौ पुनः मनः अतिजागरूकतया लक्ष्यैकसंबद्धं सत् लक्ष्यस्वरूपमवगाहते इति तयोर्भेदः । तादृशसमाधिः उमायाः जात इति भावः । ८. स्वरूपज्ञानं जातमिति यावत् । ९. भेदजनितम् । १०. कठिनम्-कोपतापाद्युद्रिक्तमिति यावत् । ११. समाहितम् । १२. मृदु । १३. तीक्ष्णम् ।

**विषाद[1]रोगस्य रसा[2]यनं सा दुःखानि धावन्ति सु[3]षुप्तियोगे ॥३१॥**
**सुषुप्ति[4]जातानि तदा मुखेऽस्या ददर्श रोचींषि[5] शिवो नवानि ।**
**[6]उपावसद्वीक्ष्य सविस्मयस्तां स्वाप[7]प्रभावेण सुखानु[8]भोक्त्रीम् ॥**
**चाप[9]भ्रुवं तां सुनिमेष[10]शोभां [11]सुनासिकां सार[12]सनेत्रकान्तिम् ।**

---

१. दुःखस्य । २. परिहारिका-शारीरकरोगस्य रसायनाद्यौषधविशेषः यथा परिहारकः । जाग्रद्दशायामनुभूतसमस्तशोकमोहादिभावानां सुषुप्तिस्तथा निवारिकेति भावः। ३. सुषुप्तौ समधिगतायाम् । ४. सुषुप्तौ हि अन्तःकरणजनितभावानां विलयात् मुखभासः अविकृता भवन्ति । ५. रुचः । ६. समीपे स्थितवान्-अत्र-"उपान्वध्याङ्वस" इति नियमेन तामुपावसदिति प्रयोगः । ७. सुषुप्तिमहिम्ना । ८. स्वरूपसुखमनुभवन्तीम् । ९. धनुराकारे भ्रुवौ यस्यास्सा ताम् । १०. निमेषः- सूक्ष्मव्यापारः सः तस्यां सुषुप्तौ न सम्भवति । तर्हि कथं सुनिमेषशोभामिति चेत् - निपूर्वकमिष्धातोः यथा पक्ष्मव्यापारः तथा पक्ष्मनिर्व्यापारोऽप्यङ्गीक्रियते-नेत्रयोर्निर्व्यापारस्थितिरपि हृदयङ्गमशोभावहेति समाधानम् ।११, चम्पककोरकसदृशनासिकाम् । १२. कमलनयनामिति यावत् । अत्रापि विकसितकमले हि कान्तिः-सुषुप्तायाः नेत्रोन्मीलनाभावात् कथम् उपमाधर्मसामञ्जस्यमित्याक्षेपे कमलमुकुलेऽपि काचित्कान्तिरस्ति । तथा च सङ्कोचविकासादयः आन्तरालिकव्यापाराः- तावता कमलसामान्यनिष्ठकान्तिरूपो धर्मः नेत्रयोः निमीलनोन्मीलनादिदशास्वपि अस्त्येवेति समाधीयते । अत्र सुषुप्तिदशाभिभूतायाः पार्वत्याः अङ्गोपाङ्गवर्णने सर्वदशासु सामान्यभूतानामुपमानपदार्थानां तद्धर्माणां च ग्रहणं युक्तमेव ।

चन्द्राननां चन्द्रकलाललाटां बिम्बाधरां निर्जितविद्रुमोष्ठीम्॥३३
कपोलरागाप्तजनानुरागां सुगन्धिनिश्श्वाससुपोषिताशाम् ।
सतीं स्तनक्षीरसुरक्षितार्यां मध्योपदिष्टाखिलदुःखकार्श्याम्॥३४

---

१. इन्दुमुखीम्-आह्लादजनकत्वात् । २. यस्याः ललाटे-फाले चन्द्रकला तिलकस्थाने निधीयते सा चन्द्रकलाललाटा ताम् । ३. बिम्बफलमिव अधरः यस्यास्तां शोणाधरामिति यावत् । अधरे शोणत्वं सहजं वा भवेत् ताम्बूलचर्वणादिना वा भवेत् । अत्र तु उत्तम-स्त्रीलक्षणोपेतायाः देव्याः पार्वत्याः विषये तत्सहजमेवेति निर्धारः । ४. वक्त्रबाह्योपरिभागस्य ओष्ठ इति संज्ञा । सः विद्रुम इव शोण-कान्तियुक्त इति भावः । ५. तस्याः कपोलयोः यो रागः कान्तिः सा सकलजनेषु अनुग्रहरूपा या प्रीतिः तस्या आसीत्-तां व्यनक्तीत्यु-त्प्रेक्षा कविसमयजा । ६. पद्मिनीजातिस्त्रीणां निश्वासाः सुगन्धयुक्ता इति प्रसिद्धिः- तादृशनिश्वासैः आशाः दिशः तत्रस्थभूतजातानीति यावत्-पोषिताः पालिताः । पार्वती जगज्जननी खलु । जनन्याः स्वसुतपोषणं सहजं विहितं च । ७. तादृशभूतजातेषु ये आर्याः-साधवः ते तस्याः स्तन्येनैव सुरक्षिताः सम्यक्पालिता इति विशेषोक्तिः । ८. उत्तमस्त्रीणां कटिप्रदेशः सूक्ष्मः अल्प इति सामुद्रिकलक्षणम् । अल्पभावस्तु कार्श्यम् । तदेवात्र लिङ्गम् । अतः अखिललोकदुःखा-नाम्-समस्तसुरासुरनराणां यानि दुःखानि तेषां कार्श्यं सूचयति अस्याः मध्यः इत्युत्प्रेक्षया सा सर्वशक्तिरूपिणी उमा समस्तदुःखविनाशद्वारा नित्यसुखप्रदा भवतीति भावः निर्गलितः ।

30

शिवः स्वकान्तामनिमेषदृष्ट्या[1] निरीक्ष्य चित्रप्रतिमेव[2] तस्थौ ।
स्पृष्ट्वालकान्तां[3] कबरीं[4] च तस्या न तृप्तदृष्टिः[5] स बभूव तस्याम् ॥
कामोऽरिमालक्ष्य[6][7] विजेतुकामः[8] कामारिमायाद्धृतकामभावम्[9][10] ।
कामाभितप्तः[11] स चुचुम्ब कान्तां कपोतवत्कातरमुत्थिता[12] सा ॥३६

---

१. निश्चलेक्षणेन । २. आलेख्ये प्रतिमा यथा निश्चला तथा निश्चलः । अभूदित्यर्थः । ३. अलकाः मुखस्य उपरिभागे विद्यमानः वक्रितकेशपाशः । स स्त्रीणां रम्य एव । तेन मनोहराम् । ४. पृष्ठतः कण्ठस्योपरिभागे कुण्डलवत् चक्राकारेण सन्दानितवेणीभारस्य कबरीति संज्ञा - ताम् । ५. तृप्ता दृष्टिः यस्य सः । ६. कामः- मन्मथः । ७. अरिं शत्रुभूतं शिवम्-ईश्वरस्य निटिलचक्षुषा हि कामः भस्मसादभूदिति पौराणिकी कथा । अतः मन्मथस्य शिवः अरिः । ८. तदा पराजितः इदानीं तं शिवं जेतुं तस्य इच्छा अभूदित्यर्थः । ९. शिवम् । १०. धृतः जातः कामभावः- पार्वत्या सह रतिविषयकमनोरथः येन सः । अत एव कामस्य विजयावकाशः । तस्मादेव कामस्य शिवसमीपगमनमिति कारणमालात्र ध्वन्यते । ११. मन्मथाविष्ट इति यावत्- कामेन निरुद्धगतिक इति रूपकानुगमः । १२. कपोतपक्षी यत्किञ्चिन्निमित्तमालक्ष्य भयग्रस्तः यथा अन्यत्र गन्तुमुद्युङ्क्ते तथा सा समाधिभङ्गहेतुकशिवस्पर्शेन कातरा भूत्वा सुषुप्तेस्सकाशा- दुत्थितेति तात्पर्यम् ।

सुषुप्तिसौख्यानुभवात् कुतो नु प्रबोधिताऽहं तव चुम्बनेन ।

१. सुषुप्तौ अहं सुखमस्वाप्समिति जाग्रदुक्तिस्मृतिलिङ्गेन सुखानुभवः निश्चीयते खलु । अत्र विचारः- सुषुप्तौ मनोलयात्तत्र सुखज्ञानं कस्येति पृष्टे आत्मन एव इत्युत्तरं भवेत् । आत्मनः पुनः कस्य सम्बधि सुखस्य ज्ञानं भवति इत्याक्षेपे स्वस्यैव ज्ञानं स्वरूपज्ञानमिति समाधानं च उच्येत । आतमनः सुखानुभवः स्वत एव तत्स्मृतिस्तु मनोद्वारेति कथं सामञ्जस्यमिति चेत् अनुभवः तज्जन्या स्मृतिश्च आत्मन एव । किंतु सुषुप्तौ मनोलयात् सुखानुभवस्स्वत एव-जाग्रद्दशायां मनोद्वारा—तदा सोपाधिकः आत्मा इति हेतोः इत्युच्येत । परन्तु निरुपाधिकस्यानुभवः कथं सोपाधिके स्मृतिं जनयतीति पुनः प्रश्नोत्थानम् । अत्मा सर्वदा निरुपाधिकः तस्मात्तस्मिन् सर्वं सम्पद्यते । सोपाधिक इति रज्जुसर्पवद्भ्रान्तिरेवेति केचित् । सुषुप्तावपि बीजरूपेणाविद्या वर्तते तया पूर्वसंस्कारबलात् आत्मा सुषुप्तिसकाशादाकृष्यते । तस्मात्तत्सुखं न नित्यसुखमिति केचित् । सुषुप्तिरेवाविद्याकृतावस्था तत्रोद्भूतमात्मसुखमपि अविद्यासंसृष्टमेवेति केचित् । सुषुप्तौ सुखानुभवज्ञानमेव नास्ति । अतः—"न किञ्चिदवेदिष"मित्युक्तिः-किंतु अविद्याकार्यस्य तात्कालिकविरतेः आत्मनः स्वरूपे कञ्चित्कालं स्थितिरिति केचित् । स्वरूपं सुखरूपमिति कृत्वा तस्य सुखरूपानुभवः इति प्रत्युत्थापिते वादिमते, सुखरूपमस्तु यथेच्छं तदनुभवः तदा नास्तीति वयं ब्रूमः । सुखमस्वाप्समित्यवगतौ सुखशब्देन निर्बाधमित्येवार्थः- सुखमित्यव्ययपदस्य अस्वाप्समिति क्रियायामन्वयहेतोः इति प्रतिवादिनः केचित् । एवमेव एतद्विचारः निरङ्कुशं प्रचलति,

ब्रूहि प्रियेति स्वयमुत्थिता सा जगाद देवं रभसादुमैवम् ॥३७॥
दुःखानि दूरे व्यसनानि कृत्वा मनोलयं प्राप्य समाधिभूमौ ।
आनन्दपीयूषमये समुद्रे तदाप्लुवेऽहं किल निस्तरङ्गे ॥३८॥
गता त्वहंतां ममतां च नष्टा जगत् समस्तं स्मृतिशून्यमासीत् ।
तथाऽप्यनिर्वाच्यमखण्डरूपं मयाऽनुभूतं नु सुखं सुषुप्तौ ॥३९॥
तारापथे तारविराजिते वा भूमिस्थले भूरुहशोभिते वा ।

---

प्रचलतु । प्रकृते परमेश्वरप्रभावमात्रेण पार्वत्यां जाता दशा सुषुप्तिर्वा समाधिर्वेति विचारः । सुषुप्तिसमाध्योः भेदः पूर्वं प्रदर्शितः । "स्वस्वरूपानुभवः जायतामस्याः" इति खलु शिवस्योद्देशः । तादृशानुभवः समाधिप्रभव एव । पुनस्तदवगतिप्रकाशः कथमित्युक्ते-सवितर्कसमाधौ - सम्प्रज्ञातसमाधौ तादृशव्यापारः उपपद्यते । अनेकांशेषु समाधिसादृश्यात् अत्र प्रकरणे अनेकशः सुषुप्तिशब्दप्रयोग इत्यलम् अनुभवैकवेद्यवेदान्ततत्वविचारेण । २. प्रच्याविता ।

१. त्वरया । २. समाधिदशायाम् । ३. स्वरूपानन्द एवामृतं तन्मये-तद्रूपे-समुद्ररूपकार्थं पीयूषशब्दोपसङ्ग्रहः । ४. प्लवधातोः लङात्मनेपदि उत्तमपुरुषैकवचनरूपम् । किलेत्यलीकार्थकपदसाहचर्यात् प्लवमानेवाभावयमित्यर्थोऽत्र ध्वन्यते । ५. निर्गताः तरङ्गाः यस्मात् सः तस्मिन् स्तिमिते इत्यर्थः । ६. अहंधीः । ७. ममकारः । ८. स्मृतेरपि न गोचरमिति भावः । ९. अपरिच्छिन्नचैतन्यम् । १०. ममानुभववेद्यमभूत् । ११. व्योम्नि "नक्षत्रे नेत्रमध्ये च तारा स्यात्तार इत्यपि" इति व्यासः । १२. वृक्षलतादिभरिते ।

न वस्तु किञ्चित्प्रतिभातमासीदात्मैव सर्वत्र बभौ सदैकः ॥४०
ममाद्य बाह्येषु सुखेषु काचित् सर्वेषु वस्तुष्वपि नास्ति चिन्ता ।
गता न्वहंधीरपि दुःखमूलं लयं क्षणादात्मनि याति सर्वम्॥४१
जाग्रद्दशा कालदिशोर्निदानं ताभ्यां समस्तं परिणामकार्यम् ।
जनिर्मृतिस्तापकरं सुदुःखं सर्वं प्रणष्टं कथमीश चित्रम् ॥४२॥
नृपत्वदेवत्वसुखं क्व देव क्वात्मानुभूतं सुसुखं सुषुप्तौ ।
जाग्रत्सुखं हेयमनित्यमल्पं तुल्यं नु किं स्वापमहासुखेन ॥४३॥
ऋते परिष्वङ्गसुखात्तवाहं न तादृशीं जाग्रति वेद्मि शान्तिम् ।

---

१. "नेह नानास्ति किञ्चन" इति श्रुत्या किमप्यन्यन्न विभातमित्यर्थः । २. स्वयंप्रकाशः एक एव भात इत्यर्थः । ३. समस्तशोकमोहादीनां बीजभूता । ४. कालदिगुपाधिका । ५. कालदिक्परिणाममेव सर्वम् । ६.राजसुखं देवसुखं च अल्पमेवेति भावः। ७. जीवात्मना समाधावनुभूतम् । ८. स्वरूपसुखं तु महदेव । ९. निकृष्टम् । १०. किञ्चित्कालिकम् । ११. सुखमिवाभासमात्रम् । १२. स्वापे-समाधौ अनुभूयमानपरमसुखेन । १३. आलिङ्गनोद्भूत-सुखात्-इदमपि तुच्छं वैषयिकसुखान्तर्भूतत्वादित्युक्ते-तथा न-शिवो हि साक्षात्परब्रह्म, तदालिङ्गनं नाम जीवात्मनस्तस्मिन्नैक्यानुसन्धानं तेन प्रकाशितं सुखम् आनन्दरूपम् - अत्मस्वरूपमेव मायोपाधिना अत-ज्ज्ञानं देव्याश्चिद्रूपिण्या अपि मायोपाधिः लीलार्थं सृष्ट्याद्यर्थं वा । तथा चोक्तम्-"मायां तु प्रकृतिं विद्यान्मायिनं च महेश्वरम्"-इति अत्र उमामहेश्वरयोरभेदबुद्ध्या एवमभिधीयते । १४. अनिर्वाच्यमिति यावत् ।

सुभोग्यजातं मधुरं च मिष्टं सुषुप्तिलेशेन[1] तुलां भजेत्किम् ॥४४॥
जडाश्च शब्दाः कुटिलं मनस्तत्केनावगम्येत सुखं विशुद्धम् ।
अन्तर्मुखैकाग्रदृशः[2] परं तत्प्रभा[3] विभाति प्रणिधानगम्या[4] ॥४५॥
दृढं त्वयोक्तं ननु दर्शयेत्तर्ह्यादर्शजातं कथमात्मरूपम् ।
स्वांशेन[5] बोध्या विषयेन किं त्वं सर्वांशिनी[6] या विषयिस्वरूपा[7] ॥४६
त्वयाऽनुभूतं हि सुषुप्तिबुद्धं[8] सुखात्मकं नित्यनिजस्वरूपम्[9] ।
त्वं ज्ञानिभिर्गम्यमखण्डतत्त्वं[10] ब्रह्मैव सच्चित्सुख[11]मित्यवेहि ॥४७॥
अज्ञानमाद्यं[12] भवदुःखबीजं[13] द्वैतस्य वृत्तिस्समुदेति तस्मात् ।
सदैकसत्याश्रयणा[14]त्त्वमार्ये निःश्रेयसे[15]ऽर्थे हि निमज्जसीत्थम् ॥

---

१. अत्र सुषुप्तिलेशपदं समाधावनुभूतसुखलवपरम्-अन्यथा सुषुप्तिरप्याविद्यकेत्यनर्थो भवेत् । तथा च श्रुतिः-"सर्वे आनन्दाः तस्य मात्रा भवन्ति" इति । २. अन्तर्मुखेन-लक्ष्यैकाग्रमनसो योगिन इति भावः। ३. स्वयं ज्योतिः । ४. समाधिसाध्या । ५. आदर्शादयः विषयास्त्वदंशाः। ६. त्वं तु तदंशिनी । ७. विषयिणी-अंशः कोऽप्यंशिनम्-विषयः कोऽपि विषयिणं न बोधयतीति तत्त्वबोधः । ८. समाधौ-ज्ञातम् । ९. आत्मस्वरूपम् । १०. एकमेवाद्वितीयमिति यत् तत्स्वरूपिणी त्वमित्याशयः। ११. सच्चिदानन्दरूपिणी तथा चोक्तं ललितासाहस्रयाम्-"सच्चिदानन्दरूपिण्यै नम" इति। लक्ष्म्यष्टोत्तरे च-"ब्रह्मविष्णुशिवात्मिकायै नम" इति-सरस्वतीस्तोत्रे च-"या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैस्सदा पूजिता" इति ।१२. अनाद्यज्ञानम् । १३. जगति समस्तदुःखकारणम् ।१४.अहं सत्यरूपः-त्वं विद्यारूपिणी मामाश्रयसि-मदभिन्नैवेति बुध्येत्थमुक्तम्, तस्मात् । १५. मोक्षरूपे ।

आदर्शतो द्रष्टुमथापि चेत्स्याल्लावण्य[1]काष्ठामतुलां तवेच्छा ।
[2]त्वद्वांछिते तेन भवत्यसाध्ये [3]मद्बाहुशौर्येण फ[4]लं च किं स्यात् ॥
निद्रासमा[5]धौ निजरूप[6]भानं ब्रह्म प्रकाश्यं निरुपाधि यत्र ।
जाग्र[7]त्स्मृतिव्याप्तसुखाद्दरीयो निर्वाणसंस्कार उदेति तस्मात् ॥
स्वप्ने पुरस्ते ह्य[9]वशास्सुधीरं नृत्यन्ति मायामयस[10]र्वभावाः ।
[11]अविक्रिया राजसि साक्षिरू[12]पा वि[13]कारजातस्य तु [14]साक्षिणी त्वम् ॥
लिखेदुमे कस्तव भावचित्रं तव प्रभावो न हि वर्णनीयः ।
चराचरं शि[15]ष्टमिदं विशिष्टं [16]त्वद्भामलेशेन विभाति नूनम् ॥५२॥
रम्यं विचित्रं च जगच्च सर्वं ब्रह्मैव जानीहि विवर्त[17]रूपम् ।

---

१. सौन्दर्यशेवधिम् । २. तवेच्छायाम् । ३. मम पराक्रमेण । ४. प्रयोजनं किमित्यनेन निष्प्रयोजनमित्युक्तम् । ५. निद्रारूप इव यस्समाधिस्तस्मिन् । ६. आत्मसाक्षात्कारः । ७. वैषयिकसुखं जाग्रत्स्वप्नपदार्थजन्यम्-अतः जन्यत्वादनित्यम्-अनित्यत्वान्न वरम् । यदि वरमिति भाव्यते-ततोऽपि निजरूपभानं दवीय एव अत एवोक्तं श्रुत्या-"सर्वे (वैषयिकाः) आनन्दाः ब्रह्मानन्दस्य मात्रा भवन्ती"ति । ८. मोक्षोपायेषु आत्मज्ञानमेव मुख्यमिति तात्पर्यम् । ९. स्वतन्त्राः । १०. मायया कल्पिताः अनेकभावाः । ११. एकरूपा १२. कूटस्थ-चैतन्यरूपिणी त्वम् । १३. सर्वेषां विषयाणाम् । १४. दृग्रूपा । १५. त्वद्भिन्नमिति यावत् । १६. चिद्भासमात्रया तथाचोक्तं श्रुत्या-"तस्य भासा सर्वमिदं विभाति" इति । १७. अतस्मिन् तद्बुद्धिर्हि विवर्तः- ब्रह्मणि जगद्धीरेव विवर्तरूपा ।

सद्ब्रह्म[1]बुध्या ह्यसदन्य[2]मत्या भातीति तज्ज्ञाः[3] प्रवदन्ति सन्तः॥
जाग्रद्दशा[4]दृष्टविशिष्टभावास्स्वापे भवन्त्यात्मनि भेदशून्याः[5] ।
लीना पुनर्जाग्रति[6] वासनाख्या[7]स्तत्तत्क्रमा[8]त्तेऽत्र समुद्भवन्ति॥५४
रूपाणि सर्वाणि च सर्वचेष्टास्त्वदेकसत्ता[9] हि भवन्ति[10] भान्ति[11]।
दिक्काल[12]भिन्ना विषया[13] भवन्ति ह्यखण्डरूपो[14]ऽस्ति परं सदाऽऽत्मा॥
सरिज्जले वा तृणवत्प्रदेशे यद्भाति[15] तद्ब्रह्म यतश्चिदेतत्[16] ।
ताराश्च विद्युच्च सदाऽऽत्मनोऽस्मादूष्म प्रकाशं सुखमाहरन्ति॥५६
मर्त्यत्व[17]मालक्ष्य भजामृतत्वं[18] त्वं भिन्धि वेषं कृतनामरूपम्[19] ।

---

१. ब्रह्मभावेन सर्वं सदेव "सर्वं खल्विदं ब्रह्म" इति श्रुतिः । "ॐ तत्सत्" इति 'ॐ'काररूपः तत् ब्रह्मैव सत् ।२. अन्यथाज्ञानेन जगदसत् मिथ्येति यावत् । अनेन न शून्यवादप्रसक्तिः। ३. तत्त्वविदः। ४.सङ्कल्पविकल्पात्मकास्सर्वे भावाः संस्काराः। ५. सुषुप्तौ लयं गच्छन्तीति तात्पर्यम् । ६. बीजभूताविद्याबलेन ते भावाः जाग्रद्दशायां पुनरुद्बुद्धा भवन्तीत्यर्थः। ७. यथाक्रमम् । ८. पुनः जगद्व्यापाराय उत्थिताः समर्था भवन्ति । ९. सर्वत्र चैतन्यव्याप्त्या सत्तासम्भवः- त्वं चैतन्यस्वरूपिणी अतस्सर्वं त्वत्सत्तात्मकम् ।१०. अस्तित्वं भजन्ते । ११.सर्वस्य भानमपि त्वत्सत्तयैव-"तस्य भासा सर्वमिदं विभाति" इति श्रुतिरत्र प्रमाणम् ।१२. देशकालपरिच्छिन्नाः।१३. जगत्पदार्थाः। १४. अपरिच्छिन्नमेव सद्रूपं आत्मवस्तु ।१५. यद्यत् प्रकाशते तत्तद्ब्रह्मैव ।१६, चित्स्वरूपमेव ब्रह्म ।१७.मर्त्यावस्थायां यानि दुःखानि तानि पर्यालोच्य । १८. मोक्षस्वरूपम्-आत्मस्वरूपमिति यावत् ।१९.नामानि रूपाणि चकल्पितानि । अतः तानि मिथ्यात्वेन परिभाव्य भेदबुद्धिं त्यजेत्यर्थः ।

मायावृतानां हि दृशामबोधाद्ध्रुवं सदेकं बहुधा विभाति॥५७

इत्थं महेशोक्तहितोपदेशात्सत्यस्वरूपोतिविमर्शकार्थात् ।
जीवात्मतत्त्वप्रविबोधरूपात्सद्धेतुसिद्धान्तितपक्षसाध्यात् ॥५८॥

निवर्तितोमागुरुचित्तवृत्तिस्स्वेच्छा सदोषेति विबोधितैषा ।
बाह्यार्थधीवासनयाऽतिदुष्टां स्वप्रार्थनामात्मनि सा शुशोच॥५९

जातानुतापा शिवमाह सोमा तुभ्यं कृतज्ञाऽस्मि सुबोधयित्रे ।

---

१. अविद्यारूपतमसाच्छादितानाम् । २. सत्यम्-आत्मवस्तु-तत्स्वरूपम् - आत्मतत्वं तत्सम्बन्धि विशेषपरिशीलनरूपः योऽर्थः तस्मात् । ३. आत्मनः अविद्योपाधिरूपभ्रान्त्या जीवात्मेति व्यवहारः- तस्य तत्वं निजस्वरूपम्-तस्य प्रविबोधः संशयविकल्पादिरहितं निश्चयज्ञानम् । तद्रूपादिति यावत् । ४. पक्षः-पर्वत इव आत्मविचारः, पक्षे साध्यम्-पर्वते वह्निरिव विचारे आत्मतत्त्वम् । तत्सिद्धान्तायसाधनाय हेतुः धूम इव ब्रह्मज्ञानम्-इति तर्कपरिभाषया उपदेशः। ५. चित्तवृत्तिः-मनोभावः- पूर्वं तमसावृतत्वाद्गुरुः- संशयात्मकः । इदानीं स्वानुभवेन, शिवेन कृततत्वोपदेशेन च निवर्तितः- सर्वे संशयाः अपगता इति यावत् । अत्र श्रुतिः- "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"-इति । ६. अविचारेण यथेच्छव्यापारः । ७. सर्वथा दोषग्रस्तः- दुःखकरी । ८. विषयाणां संस्कारबलात् । ९. स्वाकांक्षिताम् आदर्शसम्पादनरूपां प्रार्थनाम् । १०. मत्प्रार्थना न समीचीनेत्यनुतप्तहृदया सती । ११. तत्त्वोपदेष्ट्रे ।

[1]प्रगल्भनिर्बन्धकृतातियाच्ञां क्षमस्व मां भो प्रिय मां क्षमस्व॥

यदस्ति[2] यद्भाति[3] समस्तमेतन्मद्ब्रह्मरूपं[4] विशदं समीक्षे[5] ।
यूयं वयं चाखिलदृश्यलोका[6] द्वैतानवच्छिन्नसुखैकरूपाः[7] ॥६१॥

[8]मद्रूपमेतज्जगदात्मभूतं[9] नान्याद्धि किं दर्शयितुं समर्थम् ।
नादर्शकोऽस्त्यात्मसुदर्शनाय[10] ज्ञातं मम प्रार्थनतो मयेदम्[11]॥६२॥

अज्ञान[12]शोकव्यसनादिचिन्ता ध्वस्तास्समस्ता[13]स्सुखदुःखमोहाः[14] ।
[15]आनन्दपूर्णं हृदयं मदीयं विभावये शाश्वत[16]शान्तिरूपम् ॥६३॥

[17]एकात्मभिन्नाकृतिदेवदेवौ मिथस्समालप्य रसा[18]दुमेशौ ।

---

१. धार्ष्ट्येन - हठेन च कृताम् अयोग्यां प्रार्थनाम्- अत्रप्रगल्भ इति भावप्रधानो निर्देशः। २. यद्यदस्तीति व्यवह्रियते । ३. यद्यत्प्रकाशवद्भवति । ४. तत्तद्ब्रह्मरूपम् - अहं ब्रह्मरूपिणी - अतः मद्रूपमेवेति भावः । ५. सम्यग्जानामि । ६. बाह्यप्रपञ्च इति यावत् । ७. अखण्डाद्वैतरूपा इत्यर्थः । ८. एतन्मम स्वरूपम् । ९. जगद्व्यापकम् । १०. आत्मस्वरूपग्रहणाय । ११. इदं तत्वम् । १२. अज्ञानेन स्वरूपानवगत्या आपादिताः शोकादयः । १३. नाशिताः । १४. वैषयिकसुखदुःखमोहादयः। १५. मूर्तिमत्या मम यत्-हृदयमिति व्यवह्रियते तदानन्दभरितम् । १६. नित्यमबाध्यमतः शान्तिरूपम् । १७. देवदेवौ-उमामहेश्वरौ-तयोरात्मा एक एव-ब्रह्मस्वरूपत्वात् सः लीलार्थं भिन्नौ आकारौ-आकृतिविशेषौ स्त्रीपुंरूपौ भिन्ने उमा-शिव इति नामनी च परिगृहीतवानिति तात्पर्यम् । १८. प्रीतिविशेषात् ।

हस्तेन हस्तं परिगृह्य [1]धाम्नो [2]ह्यन्तर्दधाते सविधे चरन्तौ ॥६४॥
जीयादुमादर्श[3]परः पदार्थो जीयादुमादर्शसुवाञ्छि[4]तार्थः ।
जीयादुमेशः [5]करुणापयोधिर्जीयात्सु[6]रर्षिर्वरनारदर्षिः ॥६५॥

इति श्रीकृष्णार्यस्मृतिगोचरे श्रीवेङ्कटरमणार्यविरचिते
उमादर्शाख्ये तत्त्वार्थकाव्ये द्वितीयस्सर्गः ।

॥ समाप्तमिदं काव्यम् ॥

(उत्तराङ्गम्) कविकालसूचिका—

श्रीकृष्ण[7]स्मृतिबोधं काव्यं [8]श्रव्यं चकास्तु विबुधेड्यम्[9] ।
भास्वं[10]दुमादर्शाख्यं वेङ्कटरमणेन सु[11]ग्रथितम् ॥६६॥

---

१, धाम्नः-स्वस्थानत्वेन कल्पितात् कैलासस्थानादित्यर्थः । २. अन्तर्धानं गतौ अदृश्यौ बभूवतुरित्यर्थः। सोपाधिकस्थितिं परित्यज्य निरुपाधिकस्थित्या अखण्डरूपेण स्थितावित्यभिप्रायः । ३. उमायाः स्वरूपावबोधकः—श्रेष्ठः पदार्थः । उमादर्शाख्यः ग्रन्थश्च । ४. उमया पार्वत्या आदर्शद्वारा-स्वरूपावबोधनद्वारा सम्पादितः, सुवा ञ्छितार्थः-इष्टार्थः-अखण्डरूपावस्थितिरिति यावत् ।५. दयासागरः। ६. देवर्षिः । ७. का. कृष्णस्वामिऐयर्नामकसत्पुरुषस्य आंग्लभाषया स्मृत्या कल्पितम्-श्रीकृष्णेन अर्जुनाय भगवद्गीताख्यस्मृतिद्वारा कृतोपदेशम् । ८. श्रोतुं योग्यम् । सदुपदेशः- आत्मबोधः-दुःखनिवृत्तिः- सुखप्राप्तिः इत्यादि येन बोध्यते तत्-श्रव्यमेव । सर्वैरादरणीयत्वात् । ९. विबुधैः-देवैः-विद्वद्भिश्च ईड्यं स्तुत्यम् । विबुधेड्यमिति प्रतिपाद्यवस्तु प्रभावेणोक्तं न तु प्रतिपादयितुः पाण्डित्येनेत्यवगन्तव्यम् ।१०, भास्वत्-प्रकाशवत् अत्रापि पूर्वोक्तकारणेनैव ग्रंथस्य भास्वत्त्वम् । ११. समिचीनभावेन ।

रक्ताक्षिचैत्रे सितपञ्चमेऽह्नि संपूर्णमेतत्[1]कलिवारखेशे।(५०२४)
क्रैस्ते शकेऽब्दे द्विसहस्रसंख्याषट्सप्ततिह्रासित[2]लब्धसंख्ये ॥
(१९२४)

अने[3]कैभक्तप्रविभक्त[4]मेकं लब्धं त[5]देकं ह्य[6]वशिष्टमेकम्।
एकेन पू[7]र्णं[8] बहुपूर्णमे[9]कमेकं त्रिधा[10]भूतमपीति चित्रम्[11] ॥

ओं तत्सत्

## समाप्तश्च काव्यसमुदयः।

---

यथामति रचितमिति यावत्।१. "संख्याया: वामतो गति:" इति नियमेन कलौ-कलियुगे-वारखेशेकादिनव-टादिनव - पादिपञ्चकं याद्यष्टौ इति वर्णसंख्यापरिभाषया-वा ४, र = २, ख-०, श-५, अ हत्य, ५०२४ इति परिकलिते वत्सरे इत्यर्थः। २. द्विसहस्रात्-२००० संख्यासकाशात्-षट्सप्तत्या ७६ संख्यया ह्रासिता व्यत्र-कलिता-त्यक्तेति यावत् = तत्फलत्वेन लब्धा प्राप्ता संख्या यस्य स:-तस्मिन्। २०००-७६=१९२४-इति गणिते क्रैस्ते वर्षे इत्यर्थः। ३. अनेकै:- पुत्रैः विभाज्यम् एकमेव वस्तु, भक्तं विभाजितम्। ४. एवं विभक्तोऽप्येकैकभाग:पौत्रादिभि: पुनः पुनः प्रविभक्तः। ५, तथापि तैः प्रत्येकम् एकैकमेव लब्धम्। ६. ततोऽपि एकमेव शिष्यते। अनेन $१ \div \infty = १$ । $१ - \infty = १$ इति यः असम्बद्धः विषयः पूर्वार्धे सूच्यते स एवोत्तरार्धेऽपि वचनान्तरेणसूच्यते। ७. यथा—यत्किञ्चिदवकाशकलितं वस्तु एकेन पूर्णं भवति।८. तादृश-बहुवस्तुपूर्णं वस्तु च एकमेव। ९. एकं एकमेव वस्तु। १०. त्रिधाभूतं त्रिप्रकारेणावस्थितं वर्तते। ११. चित्रं परस्परमसम्बद्धवचनैः।

अर्थशून्यमिव- संशयग्रस्तमिव प्रतिभातीति चित्रम् । चित्रपरिहार-स्त्वेवम्-विभाज्यं वस्तु एकमेव-परमात्मा । सः जगत्पिता-अत्र पुत्रपौत्ररूपैर्जनैर्विभक्तः- नानाविधनामरूपैः पूजितः । अत्र श्रुतिः- "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यस्सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्ति" इति । स पुनः प्रविभक्तः- विधिविरिञ्चिरामकृष्णशिवशङ्करादिनामभिः- तथापि एकमेवावशिष्टम्-एते सर्वे परमात्मरूपाः अतः परमात्मा एकएवावशिष्टः । एकेन पूर्णं विष्णुना - परमात्मना एकेन जगत्पूर्णम्-"ईशावास्यमिदं सर्वम्" इति श्रुतिः । बहुपूर्णम् एकं सर्वपदार्थेषु परमात्मा अन्तर्यामिरूपेण वर्तत इत्यभिप्रायः । एकं ब्रह्मवस्तु त्रिधाभूतं सृष्टिस्थितिलयनिमित्तेन ब्रह्मविष्णुमहेश्वररूपेण त्रिधाभूतं वर्तत इति सर्वं समञ्जसम् । अत्र एवं चित्रोक्तेः कवेरुद्देशः श्रुत्युक्तशान्तिमन्त्रार्थं पाठकेभ्योऽवगमयितुमेव । अयं स शान्तिमन्त्रः- "ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति सर्वत्र वैदिकग्रन्थेषु प्रतिपादितः ।

इति श्रीवेङ्कटरमणार्यविरचिते - 'उमादर्शाख्ये - तत्त्वार्थकाव्ये द्वितीयसर्गस्य स्वेनैव रचिता गम्भीरपदार्थबोधिन्याख्या व्याख्या समाप्ता । समाप्तेयं सम्पूर्णग्रंथव्याख्या । समाप्तश्च काव्यसमुदयव्याख्या ।

॥ ॐ तत्सत् ॥

॥ समस्तसन्मङ्गलानि भवन्तु ॥

---

# शुद्धाशुद्ध पत्रिका

| पुटः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६ | १४ | अत्मनम् | आत्मानम् । |
| ७ | १० | निर्वहस्वे | निर्वहे |
| ८ | १९ | स्तु | स्तु |
| ,, | २० | ति | ति |
| १० | ९ | शि | र्शि |
| १२ | १८ | श्च | श्चे |
| १८ | ३ | प्राण्स्य | प्राणस्य |
| १९ | ३ | सु दोषें | सदोषें |
| २० | १ | कार्यात् | कार्यात् |
| ,, | १४ | त | रेत |
| २१ | १८ | ऐतौ | एतौ |
| २२ | ९ | कथं ? | कथम् ? |
| २३ | १८ | ननमथयुतेयं | ननमयययुतेयं |
| २४ | ८ | सवव्रे | स वव्रे |
| ,, | १२ | परिहारत् | परिहारात् |
| २७ | ४ | अभिवन्दनम् | अभिनन्दनम् |
| २९ | १७ | जालाभिमानि | जलाभिमानि |
| ,, | १९ | वदनात | वदनात् |

| | | | |
|---|---|---|---|
| ३२ | १० | तावन्मूर्च्छा | तावन्मूर्च्छा |
| ३३ | ६ | मवादीति | मवादीदिति |
| ३४ | २ | मोहा | मोह |
| ३५ | ८ | भूयादिती | भूयादिति |
| ३५ | १५ | पतिप्राणा । सा | पतिप्राणा सा |
| ३६ | ३ | बुवन्ति | ब्रुवन्ति |
| ३८ | ४ | दास्योसि | दास्यसी |
| ,, | १८ | पुत्रः । | पुत्रः |
| ४८ | ५ | पदन्ति | पदान्ते |
| ५५ | १७ | बहुधा | बहुधा |
| ,, | १९ | श्रुतति | श्रुति |
| ५९ | ९ | सगणो | सगुणो |
| ६० | ९ | अमृतोपमानम् । | अमृतोपमानं पानम् । |
| ,, | ११ | अधिक्यम् | आधिक्यम् |
| ६२ | ११ | भाविनी । | भाविनी |
| ६३ | २ | तां सुविशदम् | तां मे सुविशदम् |
| ६४ | २० | दक्षिणाग्निगाहपत्यार्ह | दक्षिणाग्निगार्हपत्याह |
| ,, | २१ | वर्चस्त्रिनः | वर्चस्विनः |
| ६७ | १६ | श्रैष्टचम् | श्रैष्ठचम् |
| ७२ | १६ | आह्लदार्थं | आह्लादार्थं |
| ,, | ९ | प्राजापलने | प्रजापालने |

| | | | |
|---|---|---|---|
| ७६ | ७ | निरपराधिनां । | निरपराधिनम् । |
| ७७ | १९ | सज्ञत | सञ्ज्ञात |
| ८० | ३ | नियतं मांं | नियतं मां |
| ,, | १९ | सर्त्र | सर्व |
| ,, | २० | सामान्यर्थ | सामान्यार्थ |
| ८१ | ९ | तुष्टुव | तुष्टुवे |
| ८४ | १४ | एवग्निः | एवाग्निः |
| ,, | १७ | मुख्यइ त्यर्थः | मुख्य इत्यर्थः |
| ८४ | १८ | ति | इति |
| ८५ | २० | १४. । | । १४. |
| ८६ | ६ | त्रिभो | विभो |
| ८७ | १० | पूर्व | पूर्व |
| ८८ | ११ | पदेवान्वयः | पदेन अन्वयः |
| ९१ | १० | कर्तव्यनि | कर्तव्यानि |
| ,, | १७ | शुनश्शेपभ्यां | शुनश्शेपाभ्यां |
| ९३ | १० | धीमहे" | धीमहि" |
| ९४ | ६ | वरो | वरो |
| ९५ | २० | प्राकारान | प्रकारान् |
| ९६ | १० | अष्ठाचत्वरिंशद्वत्सराः | अष्टाचत्वारिंशद्वत्सराः |
| ,, | १२ | बिद्याभ्यास | विद्याभ्यास |
| ९७ | १४ | सन्ध्यदि | सन्ध्यादि |

| | | | |
|---|---|---|---|
| ९९ | १८ | भ्रतरश्च | भ्रातरश्च |
| १०० | १५ | यन्दृ | यद्दृ |
| १०१ | ९ | नेदिष्ट | नेदिष्ठ |
| ,, | ११ | ,, | ,, |
| १०२ | ११ | साधनान्तरं | साधनानन्तरं |
| ,, | १९ | नेदिष्ठ | नेदिष्ठ |
| १०३ | १ | ते | ते[1] |
| १०४ | १२ | विभागर्हत्वे | विभागार्हत्वे |
| १०५ | २० | अङ्गिरसः | अङ्गिरसः— |
| १०७ | १२ | द्योतते | द्योत्यते |
| ,, | १९ | नेदिष्टः | नेदिष्ठः |
| १०८ | १ | चर णस्येव | चरणस्येव |
| ,, | ३ | नेदिष्टः | नेदिष्ठः |
| ,, | १८ | ,, | ,, |
| १०९ | ४ | ,, | ,, |
| ११० | ६ | स्नान | [13]स्नान |
| ११२ | ८ | [13]सत्र | [14]सत्र (अस्यव्याख्या ११३ पुटे द्रष्टव्या) |
| ११३ | ३ | जानीतार्यो [6]मं | [5]जानीताऽऽर्यो मां |
| ,, | ६ | नेदिष्टं | नेदिष्ठं |
| ,, | १४ | ब्रह्मण | ब्रह्मणः |
| ११४ | ४ | मे | मे[1] |

| | | | |
|---|---|---|---|
| ,, | १५ | नेदिष्टे | नेदिष्ठे |
| ११५ | ९ | सक्तस्थाभिः | सुक्तस्थाभिः |
| ,, | १७ | नेदिष्टा | नेदिष्ठा |
| ११६ | १४ | बोध्यम् । | बोध्यः । |
| ,, | १५ | समश्रित्य | समाश्रित्य |
| ,, | १६ | वत्सु | वस्तु |
| ,, | १८ | धारि | धारी |
| ११७ | २० | अपहर्तुमनाः | अपहर्तुमनाः |
| ११८ | ६ | नेदिष्ट | नेदिष्ठ |
| ,, | ९ | ,, | ,, |
| ,, | १८ | ,, | ,, |
| ११९ | ९ | व्यऽऽहीयं | व्याऽऽहीयं |
| १२० | १६ | तद्धनय | तद्धनस्य |
| ,, | १८ | त्वद्धनं | तद्धनं |
| ,, | १९ | मनोर्निगुर्धा | मनोर्निर्धारित |
| १२१ | ५ | चित्त | चित्तं |
| १२२ | ९ | देत्रः | देवः |
| ,, | १७ | नेदिष्टम् | नेदिष्ठम् |
| १२३ | २२ | नेदिष्ट | नेदिष्ठ |
| १२४ | ४ | ,, | ,, |
| ,, | १४ | ,, | ,, |
| १३० | १३ | सकाशदायुवद | सकाशादायुर्वेद |

| | | | |
|---|---|---|---|
| १३१ | ७ | बलिष्टम् | बलिष्ठम् |
| ,, | १७ | जतौ | जातौ |
| ,, | ,, | यन्निष्टं | यन्निष्ठं |
| १३४ | २० | प्राचुर्योण | प्राचुर्येण |
| १३९ | ८ | तुमन्नत | तुमन्नन्त |
| ,, | १७ | पत्तनस्यान् | पत्तनस्थान् |
| १४१ | ८ | ४. | ३, |
| १४४ | ५ | विदय | विदयं |
| ,, | १२ | बद्धाञ्जालि | बद्धाञ्जलि |
| १४७ | १५ | सर्वत्रित् | सर्ववित् |
| १४८ | ४ | दैवीयं | ''दैवीयं |
| १४९ | १२ | सुराभि | सुरभि |
| १५० | ९ | हुभारवेण | हुम्भारवेण |
| ,, | १२ | सामन्यतो | सामान्यतो |
| १५१ | ३ | योद्धाकमो | योद्धुकामो |
| ,, | २० | ७१ | १७ |
| १५६ | १८ | वदित्यर्थः | वददित्यर्थः |
| ,, | १९ | २१ समीपे | २२ समीपे |
| ,, | २० | १४ | २४ |
| १५८ | ९ | चक्रूः | चक्रुः |
| १५९ | १२ | अज्यादि | आज्यादि |

| | | | |
|---|---|---|---|
| १६० | ९ | दहशुस्तं | दहशुस्तं[13a] |
| ,, | १९ | १२. स्वर्ग | १२$_{a}$. स्वर्ग |
| ,, | १८ | विश्वमित्रम् | विश्वामित्रम् |
| १६१ | ९ | क्रन्दनं | क्रन्दनं[17] |
| ,, | ,, | वज्रपानमिव[17] | वज्रपातमिव[18] |
| ,, | ६ | बतं[18] रौद्रः | बत रौद्रं[19] |
| ,, | ,, | कार्यहनने[195] | कार्यहनने[20] |
| ,, | २० | स्वसमीहित | २०, स्वसमीहित |
| १६२ | १ | नरपो[2] | स नृपो[2] |
| १६२ | १७ | प्रर्थनायां | प्रार्थनायां |
| १६४ | ३ | या | यत्र |
| १६९ | ८ | यद्दानं मिष्टं | यद्दानमिष्टं |
| १७१ | १० | न्व्यसनो | व्यसनो |
| १७१ | १९ | "इति | इति |
| १७४ | १६ | लङि बहुवचनम् | लङिप्रथमपुरुषबहुवचनम् |
| १७९ | २० | यवत् | यावत् |
| १७७ | १९ | अशीरूपं | आशीरूपं |
| १८७ | ४ | पृच्छयोत्तान्[11] | प्रश्नयुक्तान्[11] |
| ,, | ९ | हरिश्चन्द्रण | हरिश्चन्द्रेण |
| १९० | ९ | यवत् | यावत् |
| ,, | १२ | लटयुत्तम | लडयुत्तम |
| १९१ | २ | खड्ग | खडग |

| | | | |
|---|---|---|---|
| १९२ | ८ | त्यभीर्यः | त्थभीर्यः |
| १९३ | १५ | अर्य | आर्य |
| १९८ | ११ | श्रेष्ठापद | श्रेष्ठपद |
| २०० | १२ | नित्यत्मनः | नित्यात्मनः |
| २०२ | १५ | कृ—। | कृतः— |
| २०३ | २३ | दुलभ | दुर्लभ |
| २०५ | २० | स्त्रीणं | स्त्रीणां |
| २०६ | ३ | चानवद्यम् | चानवद्यम् |
| ,, | १९ | इत्यभिप्राय | इत्यभिप्रायः |
| २०७ | ८ | भवः | भावः |
| ,, | १२ | प्रथामं | प्रथमं |
| २०८ | १३ | तैषां | तेषां |
| २१० | १९ | विनिगूहिनानि | विनिगूहितानि |
| २२० | १ | पवित्रं | पवित्रं |
| २२४ | १४ | शापद्रभ्यः | शापद्भ्यः |
| २२६ | १ | स्वीयगृहाश्रयां | स्वीयगृहाश्रयां |
| २३० | १ | नवोप्सि | तवेप्सि |
| २३५ | ५ | सम्बधि | सम्बन्धि |

Sri Kanti Kaul
Guptaganga, Nishat,
Kashmir.